।। अथ ।।

# अन्त्य पद्धति

( नेपाली भाषाटीका सहित )

प्रकाशक

दुर्गा साहित्य भण्डार

नेपाली खपड़ा, वाराणसी

# अथ अन्त्यपद्धतिः

(क) खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम्
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ।।

श्रीगणेशाय नमः।। अथ दशदानानि मदनरत्ने ।। जातुकर्ण्यः ।।

उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु ।।
गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।।
रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ।।
एतानि दश दानानि नराणां मृत्युजन्मनोः ।।

# अथ अन्त्यपद्धतिः

(क) खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं
प्रस्यन्दन्मदगन्धलुब्धमधुपव्यालोलगण्डस्थलम् ।
दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम्
वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ।।

श्रीगणेशाय नमः।। अथ दशदानानि मदनरत्ने ।। जातुकर्ण्यः ।।

उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु ।।
गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।।
रोप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ।।
एतानि दश दानानि नराणां मृत्युजन्मनोः ।।

कुर्यादभ्युदयार्थं च प्रेतेऽपि हि परत्र च ।। इति हेमाद्रिः।। तत्रादौ गोदानम् ।। दानविधिस्तु ।। ॐ तत्सत्पूर्वसंकल्पसिद्धिरस्तु अद्येहामुक-गोत्रस्यामुकशर्मणो मम सर्वपापक्षयार्थमिमां दशदानान्तरगतां गां सोपस्करां

*कर्मपात्रविधिः* - प्रथमस्थापनम्, ॐ यद्देवादेवहेडनन्देवासश्चकृमावयम् । अग्निर्मातस्मा देनसो विश्वान्मुञ्चन्त्व ꣳ हसः।। ॐ यदिदिवा यदिनक्तमेनासिच कृमा वयम्।। वायुर्मातस्मादेनसोविश्वान्मुञ्चत्व ꣳ हसः । यदि जाग्रद्यदिस्वप्नऽएना ꣳ सिचकृमा व्वयम्।। सूर्योमातस्मादेनसो विश्वान्मुञ्चत्व ꣳ हसः।। पवित्रं क्षिपेत् - ॐ पवित्रेस्थो वैष्णव्यौ० जलम् - ॐ शन्नोदेवी० तिलान् - तिलोसि सोम दैवत्यो० ।। यवान् - ॐ यवोसि। पुष्पम् - ॐ श्रीश्चते० । गन्धम् - ॐ गन्धद्वारान्० अक्षता - ॐ अक्षन्नमीमदम्० ततः कर्मपात्रोदकजलं सिंचेत् ॐ अपवित्रः पवित्रो वा० अब दश दान गर्दा पहिले प्रायश्चित गोदान गर्नु पर्दछ। गाई नै वा द्रव्य अगाडि राखेर पूजा गर्दा - ॐ नमो गोभ्य० मन्त्रले गाई र ब्राह्मणको पूजा गरी संकल्प गर्नु । ॐ तत्सत् ॐ विष्णुः, ॐ अद्य श्रीमद्भगवतो ब्रह्मणो द्वितीयपरार्धे श्री श्वेतवाराह कल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे

रुद्रदैवताकां सुवर्णादिदक्षिणायुताममुकगोत्रायामुकशशर्मणेब्राह्मणाय सुपूजिताय तुभ्यमहं संप्रददे न ममेति ।। प्रार्थना ।। यज्ञसाधनभूता या विश्वस्यात्र प्रदायिनी ।। विश्वरूपधरो देवः प्रीयतामनया गवा ।।

कलियुगस्य प्रथमचरणे भारतवर्षे भरतखण्डे जम्बूद्वीपे आर्यावर्तैदेशे भागीरथ्याः उत्तरे हिमवत्पर्वतपार्श्वे श्री पाशुपतश्रेत्रे बौद्धावतारे षष्ठिसंवत्सराणां मध्ये अमुकनामसंवत्सरे अमुकायने अमुक ऋतौ अमुक मासे अमुक पक्षे अमुकतिथौ अमुक वासरे अमुकराशिस्थिते श्रीसूर्ये, अन्येषु ग्रहेषु यथायथा- स्थान स्थितेषु एवं गुणविशिष्टायाम अद्य मम इह जन्म प्राग् जन्मार्जित सकल दुरितोपशमनाय ममाभीष्टममुककर्मकर्तुं देह शुद्धिनिमित्ते प्रायश्चित्तमूतामिमां गां रुद्रदैवत्यां यथा नाम गोत्राय यथा नाम शर्मणे ब्राह्मणाय तुम्यमहं संप्रददे न मम ।।१।।

*प्रार्थना* - कपिले सर्वदेवानां पूजयासि रोहिणी ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ।।

*दान प्रतिष्ठा* - अद्य कृतैतत्० । इति प्रापश्चित्त गोदानम् ।

दानप्रतिष्ठाङ्कुर्यात् । अद्यकृतैतत् ।। इति गोदानम् ।।२।।

अथ भूमिदानं मात्स्ये ।। निवर्तनमिताभूमि देया ।। दश हस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनमिति स्मरणात् ।। दानान्यन्यानि सर्वाणि कनकादीनि यानि च ।। तानि भूमिप्रदानस्य कलां नार्हन्ति षोडशी-मिति ।।

अद्येत्यादि षष्ठिवर्षसहस्रपरिमितस्वर्गे शिवपुरनिवासकामः सर्वपाप-क्षयकामश्चेमां दशदानान्तरगतां भूमिं बहुसस्यप्रदां वराहदैवत्याममुक-गोत्रायेत्यादि तुभ्यमहं संप्रददे न ममेति दद्यात् ।।

प्रार्थना– सर्वेषामाश्रया भूमिर्वराहेण समुद्धृता ।।

---

प्रत्यक्ष गाई वा द्रव्यको पूजा गरेर मूल अनुसार संकल्प गर्नु अनि प्रार्थनाको मन्त्र पढेर दान प्रतिष्ठा र अनुकूल भए भूयसी पनि दिए हुन्छ ।।२।।

दस हातको दण्डले ३०० सय दण्ड जति भूमिदिनु भन्ने वचन छ । अनि संकल्प

अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे ।

यस्या रोहन्ति बीजानि काले चैव महीतले ।। त्वत्प्रसादाच्च सफला मम सन्तु मनोरथा इति।। अद्यकृतैतत् ।। इतिभूमिदानम् ।।३।।

अथ तिलदानम् ।। तिलास्तु द्रोणत्रयमिता देया तच्च पंचपणपरिमिता भवति। अद्येत्यादि दशदानान्तरगतानिमान् तिलान्सोमदैवतान्विष्णुदैवतान्वा मम सर्वपापक्षयकामोऽमुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति ।

प्रार्थना । महर्षे गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः।। तस्मादेषां प्रदानेन मम पापं व्यपोहतु ।। अद्यकृतैतत् । इति तिलदानम् ।।४।।

---

गरेर ब्राह्मणलाई दिनु र प्रार्थना गरी दान प्रातिष्ठा एवं भूयासी पनि तत्काल दिनु ।।३।।

अब तिलदानमा सकेसम्म आफ्नू वजन जति नसके यथाशक्ति तिल दिनु भन्ने वचन छ । अनि संकल्प पढेर ब्राह्मणको हातमा कुश राखि दिनु अनि प्रार्थना मूल अनुसार

अथ हिरण्यदानम्।। तच्च निष्कत्रयमितं कनिष्ठद्वादशमाषको निष्कः।।
अद्येत्यादि मम समस्तपापक्षयकाम इदं दशदानान्तरगतं हिरण्यं वह्निदैवतम्
अमुकगोत्राय शर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति
।। प्रार्थना ।। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।। अनन्तपुण्यफलद-
मतः शान्तिं प्रयच्छ मे।। अद्यकृतैतत्।। इति हिण्यदानम्।।५।।

अथाज्यदानम् ।। घृतं तु प्रस्थमितं दद्यात् तच्च विंशतिसेटको

---

गरेर दानप्रतिष्ठा र भूयसि दक्षिणा पनि गरिदिनु ।।४।।

हिरण्य (सुन) दानमा निष्कत्रय भनेको एक तोला हो । त्यो सुवर्ण र दान थाप्ने ब्राह्मणलाई पूजा गरी - ॐ अद्यदेखि तुभ्यमहं सम्प्रददे सम्म पढी कुश मात्र ब्राह्मणको हातमा राखी प्रार्थना मूल अनुसार मन्त्र पढेर सुन कै प्रतिमा दानप्रतिष्ठा गर्न सके उत्तम हो, नसके द्रव्य नै दिए पनि हुन्छ । अनि दान प्रतिष्ठाको संकल्प मूल अनुसार गर्नु।।५।।

*घृतदान*- घिउ 'विंशति शेरकं' अर्थात् बीस सेर जतिको वचन पाइन्छ । अनि घिउ

भवति।। अद्येत्यादि मम समस्तपापक्षयकाम इदं दशदानान्तरगतमाज्यं मृत्युञ्जयदैवतममुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न मम इति ।। प्रार्थना ।। कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् ।। देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ।। अद्यकृतैतत् ।। इत्याज्यदानम्।।६।।

अथ वस्त्रदानम् ।। सूक्ष्म वस्त्रद्वयं बहुमूल्यमष्टहस्तमितं दद्यात् ।। अद्येत्यादि मम समस्तपापक्षयकाम इमे दशदानान्तरगते वाससी बृहस्पतिदैवतेऽमुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सम्प्रददे न ममेति प्रार्थना । शीतवातोष्णसंत्राणं लज्जाया रक्षणं परम् ।।

र ब्राह्मणको पूजा गरी ॐ तत्सत् देखि तुभ्यमहं सम्प्रददे सम्म पढी प्रार्थना मूल अनुसार गरेर दान प्रतिष्ठा र भूयसी पनि गरिदिनू ।।६।।

वस्त्र दानमा मसीनो वस्त्र आठ हात जति गर्नु भन्ने प्रमाण छ। अनि वस्त्र र ब्राह्मणको

देहालङ्कारणं वस्त्रमतः शान्तिं प्रयच्छ मे ।। अद्य कृतैतत् ।। इति वस्त्रदानम् ।।७।।

अथ धान्यदानम् ।। सार्धखारिद्वयव्रीहयो देयाः।। तच्च सार्धशतद्वय-पणपरिमितं पणषट्कं चेति।। अद्येत्यादि मम समस्तपापक्षयपूर्वकमैहिका-मुष्मिकशिवफलावाप्तिकाम इदं दशदानान्तरगतममुकसंख्याकं धान्यं प्रजापतिदैवतम् अमुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति ।। प्रार्थना । सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत्।।

---

पूजा गरी ॐ तत्सत् देखि तुभ्यमहं सम्प्रददे सम्म मन्त्र पढी कुश विप्रको हातमा राखिदिनु । अनि प्रार्थना (कामधेनो०) पढेर दानप्रतिष्ठा गरी माथि कै अनुसार भूयसी समेत् दिनू ।।७।।

धान्यदानमा- धान अढाई मन दिनु भन्ने प्रमाण पाईन्छ । अब धान र ब्राह्मणको पूजा गरी मूल अनुसार संकल्प पढेर कुश बाहुनको हातमा राखिदिनु । अनि मूल

प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ।। अद्यकृतैतत् ।। इति धान्यदानम् ।।८।।

अथ गुडदानम् ।। गुडं पलषष्ठिमितं दद्यात् ।। अद्येत्यादि मम समस्तपापक्षयपूर्वकं गृहे लक्ष्म्याः स्थैर्यसिद्धिकामः इदं दशदानान्तरगतं गुडं रसवर्य सोमदैवतं कुबेरदैवतं च सदक्षिणाम् अमुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति ।। प्रार्थना- गुडमिक्षुरसोद्भूतं मंत्राणां प्रणवो यथा ।। दानेनानेन मे तस्य परा लक्ष्मीः स्थिरा गृहे ।। अद्यकृतैतत् ।। इति गुडदानम् ।।९।।

---

अनुसार प्रार्थना र दानप्रतिष्ठा तथा भूयसी समेत संकल्प पढेर दिनु ।।८।।

गुड दानमा- गुड़ (सक्खर) साठी सेर जतिको वचन पाईन्छ । अब ब्राह्मण र गुड़को पूजा गरी संकल्प मूल अनुसार पढी कुश बाहुनलाई दिनु । अनि प्रार्थना र दानप्रतिष्ठा तथा भूयसी दक्षिणा समेत मन्त्र पढेर दिनुपर्दछ ।।९।।

अथ रजतदानम् । पलत्रयमितं रौप्यं दद्यात् । अद्येत्यादि मम समस्तपापक्षयपूर्वकविष्णुप्रीतिकाम इदं दशदानान्तरगतं रौप्यं चन्द्रदैवतं यथानामगोत्रायाऽमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति। प्रार्थना- प्रीतिर्यतः पितृणां च विष्णुशंकरयोःसदा ।। शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे ।। अद्यकृतैतत्० । इति रजतदानम् ।।१०।।

अथ लवणदानम् ।। लवणमर्धखारिकं दद्यात् ।। अद्येत्यादि मम समस्तपापक्षयपूर्वकशिवप्रीतिकामः इदं दशदानान्तरगतं लवणं

---

रजत (चाँदी) दानमा- चाँदी तीन पल जनि दिनु भन्ने वचन पाईन्छ । दिने द्रव्य र ब्राह्मणको पूजा गरी मूल अनुसार संकल्प पढी कुश मात्र बाहुनलाई दिनु अनि प्रार्थना दानप्रतिष्ठा र भूयसी दक्षिणा सवै मूल अनुसार गदिदिनु ।।१०।।

लवण (नून) एक मन जति दिनु भन्ने प्रमाण पाईन्छ । अनि ब्राह्मण र नूनको पूजा

सर्वरसोत्कृष्टं सोमदैवतं समुद्रदैवतञ्चाऽमुकगोत्रायाऽमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सम्प्रददे न ममेति ।। प्रार्थना- यस्मादन्नरसाः सर्वेनोत्कृष्टा लवणं विना ।। शम्भोः प्रीतिकरं यस्मादतः शान्तिं प्रयच्छ मे ।। अद्य कृतैतत् इति लवणदानम् ।।११।।

इति दशदानानि।। अथ पञ्चधेनुदानानि ।। तत्रादौ पापापनोदधेनुदानम्, ब्राह्मे ।। दानोपस्करास्तु गोदानोक्ता एव ।। अद्येत्यादि ममात्मनो मनोवाक्कायकर्मजमाजन्मोपार्जितपापापनोदकामः इमां कृष्णां पापापनोदधेनुं यथाशक्तिसोपस्करां रूद्रदैवत्याममुकगोत्रायामुकशर्मणे सुपूजिताय

---

गरेर मूल अनुसार संकल्प पढेर कुशमात्र ब्राह्मणलाई दिएर प्रार्थना, दानप्रतिष्ठा र भूयसी दक्षिणा सबै संकल्प गरेर दिनु ।।११।।

पापापनोदधेनु दानमा- प्रत्यक्ष गाई भए त्यसको पुच्छरले ॐ मनो मे तर्पयत० यस मन्त्रले आफ्नू शिरमा जल छर्कनु अनि गाई र ब्राह्मणको पूजा गरी मूल अनुसार संकल्प

ब्राह्मणाय तुभ्यमहं सम्प्रददे न ममेति ।। प्रार्थना ।। आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः ।। तत्सर्वं नाशमायान्तु पापधेनुप्रदानतः।। अद्यकृतैतत् ।।१२।।

अथ ऋणोपनोदधेनुदानम् ब्राह्मे ।। अद्येत्यादि ममाऽऽजन्मोपार्जितैहिकामुष्मिकसमस्तऋणपातकच्छेदकामः इमां समस्तऋणापनोदधेनुं यथाशक्ति सोपस्करां रुद्रदैवत्याममुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सप्रददे न ममेति ।। प्रार्थना- ऐहिकामुष्मिकञ्चैव सप्तजन्मार्जितमृणम् ।। तत्सर्वं नाशमायातु गामेकां ददतो मम ।। अद्यकृतैतत् ।।१३।।

---

पढी कुश ब्राह्मणको हातमा राखि दिनु अनि प्रार्थना र दान प्रतिष्ठा तथा भूयसि दक्षिणा समेत गरिदिनु ।।१२।।

ऋणोपनोद धेनु दानमा - माथि कै जस्तो पूजा, संकल्प, दान प्रतिष्ठा, प्रार्थना भूयसी दक्षिणा- यी सबै मूल अनुसार पढ्दै काम गर्दै जानुपर्दछ ।।१३।।

अथ प्रायश्चित्तधेनुदानम् ।। ब्राह्मे ।। अद्येत्यादि मया जन्मप्रभृति अद्य पर्यन्तं यावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्याऽऽमरणान्तपापापनोदकामः इमां कापिलां धेनुं यथाशक्तिसोपस्करां रुद्रदैवत्यां प्रायश्चित्तत्वेनाऽ मुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति।। प्रार्थना- प्रायश्चित्ते समुत्पन्ने निष्कृतिर्न कृता क्वचित् ।। तस्य पापस्य शुद्ध्यार्थं धेनुमेतां ददामि ते ।। अद्यकृतैतदिति।।१४।।

अथ मोक्षधेनुदानम् ।। अद्येत्यादि मम समस्तपापक्षयपूर्वकसंसार-

१४. प्रायश्चित धेनु दानमा गाई वा द्रव्यको पूजा गरी ब्राह्मणलाई टीका लगाई संकल्प गर्नु। अनि कुश मात्र ब्राह्मणको हातमा राखिदिनु । अनि प्रार्थना पढेर दानप्रतिष्ठा र भूयसी दक्षिणा पनि दिनु पर्दछ ।।१४।।

अब मोक्ष धेनु दानमा - ॐ अद्य-देखि तुभ्यमहं सम्प्रददे सम्म पढी कुश ब्राह्मणका

मोक्षप्राप्तिकामः श्रीपापापहमहाविष्णुप्रीतिकामश्च इमां मोक्षधेनुं यथाशक्ति सोपस्करां रुद्रदैवत्याममुकगोत्रायाऽमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं संप्रददे न ममेति ।। प्रार्थना- मोक्षं देहि हृषीकेश ! मोक्षं देहि जनार्दन। मोक्षधेनुप्रदानेन मम मोक्षोऽस्तु वेगतः इति ।। अद्यकृतैतत्।। सुवर्णदक्षिणां दद्यात् ।। धेन्वभावे तन्निष्क्रियत्वेन द्रव्यं देयम् ।। इति मोक्षधेनुदानम् ।।१५।।

---

हातमा राखिदिनु । अनि प्रार्थना र दान प्रतिष्ठा मूल अनुसार गरेर भूयसी दक्षिणा पनि दिनु । यस पछि दशदानविधि सकियो ।

कृष्णां वा पाटलां वापि धेनु कुर्यादलंकृतम् ।। तत्र सुवर्णस्य यमप्रतिमां लौहदण्ड-सहितां निर्माय गर्त विधायः, इक्षुमयीं नौकां कृत्य तां तज्जले संस्थाप्य गां ब्राह्मणं च सम्पूज्य, दक्षपादांगुष्ठेन नावं स्पृष्ट्वा कुश तिल- जल- सहितगोपुच्छमादाय संकल्पं कुर्यात् - ॐ अद्य मम यमद्वारस्थित वैताण्याख्य नद्योत्तरणार्थमिमां गां रुद्रदैवत्यां - अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । ब्राह्मणहास्ते गोपुच्छं दद्यात्

इति दशदानविधिः समाप्तः।। शुभम्भूयात् ।।
श्रीगणेशाय नमः।। सत्यधरतनूजेन रामोपाध्यायसूरिणा ।।
नत्वा विघ्नेश्वरं देवं क्रियते चान्त्यपद्धतिः ।।
आसन्नमरणं पित्रादिकंस्तीर्थादौ नीत्वा दानं कारयेत् ।। अथ तिलपात्रदानम् । कांस्यपात्रे यथाशक्ति तिलान् क्षिप्त्वा हिरण्यं,

---

प्रार्थना - धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे । उत्तारणार्थ देवेशि वैतरण्यै नमोस्तु ते यमद्वारे महाघोरे घोरा वैतरणी नदी। तर्तु कामो ददाम्येतां कृष्णां वैतरणी तु गाम् ।। प्रार्थना - विष्णुरूप हितश्रेष्ठ भूदेव जगपावन । तर्तु वैतरणीमेतां कृष्णां गां प्रददाम्यहम्। एवं सम्प्रार्थ्य दानप्रतिष्ठां दद्यात् - ॐ अद्य कृतैतत् वैतरणी गोदान प्रतिष्ठार्थमिदं अमुक द्रव्यं अमुकदैवताकं अमुक गोत्राय अमुक शर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे । इति वैतरणी गोदानम् ।।१५।।

वैतरणी धेनु दानमा काली वा पाटली गाई यथाशक्ति अलंकृत पारेर सुवर्णको यमराजको प्रतिमा लोहदण्ड लिएका, अनि ऊखूको डुङ्गा बनाई पानीमा राखेर गाई र

देयद्रव्याणि च संपूज्य कुशतिलजलान्यादाय ॐ अद्येत्यादि देशकालौ संकीर्त्य मम जन्मप्रभृतिमरणान्तकृतनानाविधपापनाशनार्थं सहिरण्यं तिलपात्रं विष्णुदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय सुपूजिताय तुभ्यमहं संप्रददे ।।

प्रार्थना ।। तिलाः पुण्याः पवित्राश्च सर्वकार्यकराः स्मृताः ।। शुक्ला वा यदि वा कृष्णा ऋषिगोत्रसमुद्भवाः।। यानि कानि च पापानि ब्रह्महत्यासमानि च ।। तिलपात्रविधानेन तानि नश्यन्तु सर्वदा।। महर्षे गोत्रसंभूताः कश्यपस्य तिला स्मृताः ।। तस्मात्तेषां प्रदानेन मम

ब्राह्मणको पूजा गरी आफ्नू खुट्टाको बुढी औंलाले डुंगालाई छोएर संकल्प गर्नु- ॐ अद्य मम, देखि सम्प्रददे सम्म पढी गाईको पुच्छर बाहुनको हातमा राखिदिनु । अनि मूल अनुसार प्रार्थना र दान प्रतिष्ठा गरी भूयसी दक्षिणा पनि दिनु पर्दछ ।।१६।।

मर्न तत्पर भएका पितालाई कुनै तीर्थ वा नदी तटमा लगेर अन्त्य कालमा गरिने

पापं व्यपोहतु ।। इत्युच्चार्य विप्रहस्ते कुशजलं क्षिपेत् ।। दक्षिणाद्रव्यादि-कमादाय ।। अद्य कृतैतत् सहिरण्यतिलपात्रदानप्रतिष्ठासिद्ध्यर्थं दक्षिणां हिरण्यमग्निदैवतं तत् मूल्योपकल्पितं द्रव्यं वा यथानामगोत्रायेति, पित्राद्यशक्तौ पुत्रादि दद्यात् ।। तत्र मन्त्रः।। ममेति स्थाने अस्य पापं व्यपोहतु इति वदेत् ।।१७।।

अथोत्क्रान्तिधेनुदानम् ।। गोब्रह्मणौ गन्धादिभिरभ्यर्च्य ।। ॐ अद्येत्याद्यमुकगोत्रस्यामुकशर्मणो मम प्राणोत्क्रमणे प्रतिबन्धकोक्तिनिष्कृ-

दान गराई काँसको पात्रमा सुन र तिल राखी ब्राह्मण र तिल पात्रको पूजा गरी तिल कुश लिएर मूल अनुसार संकल्प गरी कुश ब्राह्मणको हातमा दिनु । अनि प्रार्थना र दान प्रतिष्ठा गरेर भूयसी पनि दिनु । मुमुक्षुले गर्न नसके अरूले नै गरिदिए पनि हुन्छ केवल 'मम' भनेको ठाउँमा 'अस्य पापं' भनिदिए हुन्छ ।।१७।।

उत्क्रान्ति धेनु दानमा - गाई र ब्राह्मणको पूजा गरेर तिल कुश लिई मूल अनुसार

त्यनुक्तनिष्कृतिसमस्तपापक्षयद्वारा सुखप्राणोत्क्रमणार्थं यथाशक्त्यलंकृता-मिमामुत्क्रान्तिधेनुं रुद्रदैवत्याममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।।

प्रार्थना ।। असूत्क्रान्तौ प्रवृत्तस्य मुखोत्क्रान्तिनिवृत्तये । तुभ्यं संप्रददे नाम्ना गां समुत्क्रान्ति संज्ञिकाम् ।। इत्युक्त्वा विप्रहस्ते कुशजलं दत्त्वा दानप्रतिष्ठां च कुर्यात्, प्रतिग्रहीता स्वस्तीत्युक्त्वा गोपुच्छग्रहणम् कृत्वा कोदात् इति प्रतिग्रहीता पठेत् ।।१८।।

ततः उक्त रीत्या शवं श्मशानं नीत्वा यथोक्तसंस्कारं कृत्वा ततः कर्ता अन्ये च पुत्राः कक्षोपस्थौ वर्जयित्वा लोमनखानि वापयेयुः ।।

---

संकल्प पढी कुश बाहुनको हातमा दिनु र प्रार्थना पनि मूल अनुसार नै गरिदिनु । अनि दान प्रातिष्ठा, भूयसी गर्नु पर्दछ । दान थाप्नेले 'ॐ कोदात्० मन्त्र पढ्नू।।१८।।

मुमुक्षको प्रणान्त भएपछि शवलाई श्मशानमा लगेर आफ्नू चलन अनुसार संस्कार

कर्तातिरिक्तानां दशमेऽन्हि यथाचारम् ।। भर्तरि मृते पत्न्या आद्येऽह्नि दशमेऽह्नि वा सर्वान्केशान्समुद्धृत्य अङ्गुलद्वयछेदनं वपनं वा यथाचारम्।। ततः स्नानादिकं विधाय कृत्तोरीयः शुचौ देशे कण्टकान्यपास्य यथामिलितदारुभिश्चितां कृत्वा चितोपरि कुशास्तरणं विधाय चितायां कृतपवित्रं शवमुत्तरशिरसमधोमुखं स्त्रियं चोत्तानदेहमुत्तरशिरं संस्थापयेत्।। ततः आचम्य कृतापसव्यो दक्षिणाभिमुखो दक्षिणहस्तेऽग्निं वामहस्ते समिधसप्तकं गृहीत्वेमं मन्त्रं पठेत्– कृत्वा सुदुष्करं कर्म जानता वाप्यजानता ।। मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ।। धर्माधर्मसमायुक्तं लोभमोहसमावृत्तम् ।। दहेऽहं सर्वगात्राणि दिव्याँल्लो-

गर्नु। अनि कर्ता र अन्य छोराहरूले काखीको रौं र नङ् न काटी कपाल खौरनु । अरूले दसौं दिनमा खौराए पनि हुन्छ । यदि लोग्ने मरेको भए पत्नीले तत्काल वा दस दिनमा पूरा कपाल वा अलिकति कपाल काटेर आचार अनुसार विधि गर्नु। अनि स्नानादि

कान्स गन्छतु ।। इति पठित्वा शीघ्रं प्रदक्षिणां कृत्वा शिरोदेशेऽग्निं दद्यात् ।। मंत्रश्चायमदृष्टार्थत्वात्स्त्रीदाहेप्यविकृत एव पठनीयः पुंस्त्वाऽऽ-विचक्षणात् ।। सव्येन घृतं स्रुवेण गृहीत्वा दक्षिणाभिमुखस्तूष्णीमेकाहू-तिञ्जुहुयात् ।। ततः सप्रदक्षिणमेकैकां समिधं तूष्णीं चितोपरि क्षिपेत्।। नग्नानदग्धव्यः।। दग्धशेषं किंचित् त्यजेत् ।। अर्धदग्धे घृताक्तं पञ्च समिधं जुहुयात् ।।अनेन मन्त्रेण- अस्मात् त्वमधिजातोसि त्वदयं जायतां

सकेर छोरोले दूध तिल र चामल मिलाएर पहिले मृत्युस्थानमा पिण्ड देओस् । त्यही पुत्रले पहिले काँधमा बोकोस् - त्यसले एकेक पाइलामा एकेक अश्वमेधको फल पाउँछ यस्तो शास्त्रीय वचन छ। अनि श्मशान तिर जाँदा आधा बाटोमा बिसाएर श्मशानमा

सगोत्रैः संगृहीत्वा तु चितामारोप्यते शवः । अधोमुखो दक्षिणादिक् चरणस्तु पुमानिति । उत्तानदेहां नारीं तु सपिण्डैरपि बन्धुभिरिति ॥ ब्रह्मपुराणवचनात्।।

पुनः ।। असौ स्वर्गाय लोकाय स्वाहा ज्वलतु पावकः ।। अवशिष्टशरीर-भागमम्भसि क्षिपेत् ।। क्रव्यादाय नमः इति मन्त्रेण ।।

अथ चितापिण्डदानम् ।। स्नानादिकं कृत्वाऽपसव्ये नषट्पिण्डान् कृत्वा दक्षिणाभिमुखः वामजानुं पातयित्वा कुशतिलजलान्यादायाद्यामुक-गोत्रामुकप्रेत प्रथमपिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम् एवञ्च पिण्डस्यासनं दद्यात् ।। ततो तिलकुशजलसहितं प्रथमपिण्डमादाय। अद्यामुकगोत्रामुकप्रेत प्रथमपिण्डस्थाने इदमवनेजनं ते मया दीयते

लगी चिता बनाउँदा पीपल, पलाश र श्रीखण्डको काठले चिता बनाओस् । स्त्रीलाई उत्तानो पोल्नु भन्ने वचन छ । अनि छोरोले कपाल खौरी नयाँ वस्त्र लगाएर आचमन गरी अपसव्य भएर दक्षिणतिर फर्की दाहिने हातमा आगो र बायाँ आतमा समिधा लिई - ॐ कृत्वा सुदुष्करं० लोकान् स गच्छतु सम्म पढ्दै तीन परिक्रमा गरेर मुखाग्नि देओस्। सव्य भएर दक्षिणतिर फर्किई एकपल्ट घिउको धारा देओस् । अनि सात परिक्रमा गरेर

तवोपतिष्ठताम् १ द्वारस्थाने पान्थनाम्ना २ चत्वरस्थाने खेचरनाम्ना ३ विश्रामस्थाने भूत नाम्ना ४ काष्ठसंचयनस्थाने प्रेतनाम्ना ५ चितास्थाने साधकनाम्ना ६ दद्यात् ।। अद्यामुकगोत्रामुकप्रेत इदं प्रथमपिण्डं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम् ।। एवमेव क्रमेण द्वितीयादिपञ्चपिण्डेषु दद्यात् ।।१९।।

अथोदकदानम् ।। तत्र प्रेतदाहानन्तरं सर्वे शवस्पृष्टा शवानुगमनकर्तारश्च

---

एकेक समिधा आगोमा हालोस् । अनि आधा डढ़िसके पछि - ॐ अस्मात्व० पढेर पाँच समिधा घिउमा चोभेर आगोमा हालि देओस् । पूरा जलेर शेष रहेको लुगामा पोको पारी ॐ क्रव्यादाय नमः' भनेर जलमा फालिदिनु । अनि चिता सफा पारेर स्नान गरी अपसव्य भई चामल वा जौको पीठोमा दूध दालेर छ पिण्ड देओस् । त्यसको संकल्पमा मूल अनुसार वचन पारेर भन्नु पर्दछ । छ आसन, छ पिण्ड र छ अवनेजन दिनु पर्दछ । यसको विधान मूलमा छ, हेर्नु ।।१९।।

चितामनवलोकयन्तः।। अहरहर्नीयमानो गामश्वं पुरुषं पशून्। वैवस्वतो न तृप्येत सुराया इव दुर्मतिरिति यमगाथां गायन्तीं नदीं जलाशयान्तरं वा बालपुरःसराः पंक्तिक्रमेण गत्वा श्यालकमन्यं ब्राह्मणं वा उदकं करिष्याम इत्युदकं प्रार्थयेयुः। यदि शतवर्षादर्वाक् प्रेतस्तदा कुरुध्वमाचैवं पुनरिति प्रतिवचनम् शतवर्षप्रेते कुरुध्वमिति प्रतिवचनं गृहीत्वा ।। कृतापसव्यो दक्षिणाभिमुखो एकवस्त्रधरो वामकरस्यानामिकया आपो नः शोशुचानोदकमिति दक्षिणतो जलं नीत्वा तूष्णीं निमज्जेयुः।। अङ्गं च न निघर्षेयुः ।। ततो द्विवासस आचम्य कुशोपरि स्थापितपाषाणोपरि कृतापसव्यो दक्षिणाभिमुखः कुशहस्तः कुशतिलजलान्यादाय

त्यसपछि मलामी जाने जतिले चितातिर न हेरी स्त्री र बालकहरूलाई अघि लगाई यम गाथा मूलमा हेरेर भन्दै स्नान गर्ने स्थानमा गएर अपसव्य भई एक वस्त्र पहिरेर दक्षिण फर्किई स्नान गरोस्। देह मिची मिची नुहाउन हुँदैन। अनि सव्य भएर आचमन

अद्यामुकगोत्रामुकप्रेत एष सतिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठतामिति प्रेताय एकैकमञ्जलिं दद्युः ।। स्त्रीप्रेतायान्तु अद्यामुकगोत्रेऽमुकप्रेते एष सतिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठतामिति वाक्यम् ।। इयं जलदानक्रियां सपिण्डैर्विषमदिने पुत्रैश्च प्रत्यहं कार्या । ततो गृहागमन समये आत्मानं धूपयित्वा मार्गे कंटकोपरि पाषाणं स्थापयित्वा पाषाणे पादन्यासं कृत्वा देहल्यश्मनि चरणौ दत्वा गृहं प्रवेशयेत् ।

ततः उपवास दिवसे सायंकाले कर्तृशयनस्थानसमीपे सप्तधान्योपरि जलपूर्णघटं संस्थाप्य तदुपरि तिलतैलेन घृतेन वा दशाहपर्यन्तमहर्निशं दीपं प्रज्वालयेत् । अहंकारं महाचोरं रविर्यत्र न भाषते। तस्य सन्तरणार्थाय

---

गरी अपसव्य भएर यौटा ढुंगामा कुश तिल जलले अंजलि दिंदा मूल अनुसार संकल्प पढ्नू। अरूले पनि अंजलि दिनु पर्दछ। यो अंजलि दिने क्रम कर्ताले प्रतिदिन एकेक बढाएर दिनु पर्दछ। त्यस पछि घर आई अथवा आफ्नू चलन अनुसार गर्नु राम्रो हुनेछ

दीपं दद्याद्दशाह्निकमिति वचनात्। दक्षिणाभिमुखोऽपसव्यं कृत्वा कुशतिल-जलान्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य यमदुर्गमार्गमहाघोरान्धतमः सन्तरणार्थमद्यादिदशदिनपर्यन्तमहर्निशं सप्तधान्योपरिस्थापितजलपूर्ण-घटोपरि एष दीपस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ।।२१।।

द्वितीयदिने कर्तास्नातः एकस्मिन्पाषाणे तिलतोयाञ्जलिं वर्द्धमानं दत्वा श्राद्धदेशमागत्य पाकं सम्पाद्य ।।

स्त्री प्रेत भए मूल अनुसार संकल्प गर्नु । घर आँउदा बाटोमा काँढा माथि ढुङ्गा राखेर त्यसैमा कुल्चेर घरमा प्रवेश गर्नु ।।२०।।

अनि उपवास गरेको दिन सायंकालमा कर्त्ता सुत्ने स्थानको नगीचै सप्तधान्यमाथि जलपूर्ण घडा स्थापित गरी त्यसैमाथि तिलको तेल वा घिउको बत्ती दश दिन पर्यन्त अहर्निश (दिन रात) बालि राख्नु । अनि प्रार्थनाको मन्त्र पढेर दक्षिण फर्की अपसव्य भएर कुश-तिल जल लिई संकल्प गर्नु पर्दछ ।।२१।।

दोस्रो दिन कर्ताले स्नान गरी ढुंगामा तिल-तोयाञ्जलि दिई श्राद्धस्थानमा पिण्ड

अथ प्रयोगः ।। दीपं प्रज्वाल्य कर्ता कुशहस्तः सोत्तरीय आचम्य कृतापसव्यः दक्षिणाऽभिमुखः पातितवामजानुर्वेदिकायां दक्षिणाग्रान् कुशानास्तीर्य, कुशतिलजलान्यादाय ।। अद्येत्यादि अमुकगोत्रस्यामुक-प्रेतस्य रौरवनाम नरकोत्तारणाय मूर्धावयवसंभूत्यै प्रथमदिननिमित्तकशिरः पूरकपिण्डदानमहं करिष्ये इति प्रतिज्ञासंकल्पं कृत्वा पुनः कुशतिल-जलान्यादाय अद्यामुकगोत्रामुकप्रेत प्रथमदिनसम्बन्धि प्रथमपिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठतामित्यास्तृतकुशोपरि पितृतीर्थेना-वनेजनं दद्यात् ।। ततस्तिलघृतमधुयुक्तं पिण्डं कुशतिलजलसहितमादाय-अद्यामुकगोत्रामुकप्रेत रौरवनामनरकोत्तारणाय प्रथमदिनसम्बन्धि एष

पकाउनु । अनि बत्ती बालेर कर्ताले आचमन गरी अपसव्य भएर दक्षिण फर्की बायाँ घुँड़ा मारेर वेदीमा कुश राख्नु । अनि प्रतिज्ञा संकल्प मूल अनुसार गर्नु । फेरि अर्को संकल्प लिएर ढिकुरो माथि पितृ तीर्थले अवनेजन राख्नु । अनि पिण्ड लिएर संकल्प

शिरः पूरकःप्रथमपिण्डस्ते मया दीयते तवोपतिष्ठतामित्यवनेजनस्थाने पिण्डं दद्यात् ।। ततः कुशतिलजलान्यादाय अद्यामुकगोत्रामुकप्रेत इदं पिण्डं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततः प्रेतमुद्दिश्य तूष्णीमेवोशीरचन्दनोर्णसूत्रभृङ्गिराजत्रपूगी-फलगन्धपुष्पाक्षतधूपदीपनैवेद्यैः पिण्डमभ्यर्च्य कुशतिलजलान्यादाय-अद्यामुकगोत्रामुकप्रेत प्रथमदिनसंबन्धि प्रथमपिण्डे एतानि पिण्डस्थोशीर-चन्दनोर्णसूत्रभृङ्गराजपत्रपूगीफलगन्धपुष्पाऽक्षतधूपदीपाक्षतादिनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठतामित्युत्सृजेत् ।। ततः कुशतिलजलान्यादाय।। अद्यामुकगोत्रामुकप्रेत एष सतिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठता-

पछी त्यही आसनमा राखिदिनु । अनि अर्को संकल्प लिएर प्रत्यवनेजन दिनु । अनि पिण्ड-पूजामा मूल अनुसार सबै वस्तु चढाई संकल्प गरिदिनु। अनि तिल जलले अंजलि दिनु । अनि माटोको पात्रमा जल भरेर संकल्प गरिदिनु । अनि त्रिकाठीमा दूध

मित्येकं तिलतोयाञ्जलिं पिण्डोपरि दद्यात् ।। ततः सतिलतोयपूर्णपुट-पात्रमादाय कुशतिलजलान्यादाय ।। अद्यामुकगोत्रामुकप्रेत इदं सतिलतोयपूर्णपुटपात्रं ते मया दीयते तवोपतिष्ठतामिति तिलतोयपूर्णपुटपात्रं पिण्डसमीपे उत्सृजेत् ।। ततस्त्रिकाष्ठिकास्थितयोर्पुटपात्रयोर्नीरं क्षीरञ्चा-दाय।। अद्यामुकगोत्रामुकप्रेत इमे त्रिकाष्ठिकास्थिते नीरक्षीरयुतपुटपात्रे ते मया दीयेते तवोपतिष्ठेतामित्युत्सृज्य ।। श्मशानानलदग्धोसि परित्यक्तोसि बान्धवैः।। इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब । इति पठेत् । ततः सतिलसुशीतलजलपूर्णं घटमग्रे कृत्वा ।। अद्यामुकगोत्रामुक-प्रेतैष सतिलसुशीतलजलोपेतो घटस्ते मया दीयते तवोपतिष्ठतामित्युत्सृज्य।।

---

र पानी राखी संकल्प मूलमा हेरेर गर्नु। अनि प्रार्थना- श्मशानानल० देखि इदं पिबसम्म पढ्नू । अनि जल पूर्ण घड़ा सामुन्ने राखी संकल्प गर्नु र प्रार्थना सुशीतल-जलोपेत० देखि उपतिष्ठताम् सम्म पढ्नू । अनि सव्य भएर अनादि० पाठ गरेर

सुशीतलजलोपेतः सर्वोपस्करसंयुतः।। एष घटो मया दत्तः प्रेताय उपतिष्ठतामिति पठेत् ।। ततः सव्येन ।। अनादिनिधनो देवः शंखचक्र-गदाधरः ।। अक्षय्य पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव इति पठेत् ।। ततः कुशतिलजलादिसहितां लौहदक्षिणामादाय अद्यामुकगोत्रस्यामुक-प्रेतस्य कृतैतच्छिरपूरकप्रथम पिण्डदानप्रतिष्ठार्थं लौहं यमदैवतं पलपरिमितं तन्निष्क्रयं द्रव्यं वा दक्षिणात्वेन दातुमहमुत्सृजे ।। इति दक्षिणां दद्यात्।। इत्युत्सृज्य तत्सर्वं जले क्षिपेत् ।। ततः पिण्डदानानन्तरमाचारप्राप्तं स्नानं कुर्यात् ।। अनेनैव प्रकारेण दशपिण्डा देयाः।।

प्रथमदिन सम्बन्ध्यवयवपिण्डदानान्तरं दशदिनपर्यन्तं पिप्पलादिवृक्षे जलपूर्णघटमधः छिद्रं कृत्वा शिक्ये धारयेत् ।। तत्र वाक्यम् ।।

फलामको टुक्रा दक्षिणा संकल्प गरी दिनु । सबै सामग्री जलमा फालिदिनु । अनि

कुशतिलजलान्यादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्य पापशान्त्यध्वश्रम-विनाशार्थमिदमाकाशाधिकरणकजलमद्यादिदशरात्रं यावत्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ।।२२।।

ततः सायंकाले गोमयोपलिप्ते प्रांगणे त्रिकाष्टिकोपरि पुटकादौ दीपं पानीयं पुष्पं च संस्थाप्य आशौचान्तं प्रत्यहं दद्यात् ।। अपसव्येन कुशतिलजलान्यादाय ।। अद्यामुकगोत्रामुकप्रेतप्रथमदिनसम्बन्धिसायंकाले

---

आचार अनुसार स्नान गरे पनि हुन्छ । अनि दशदिनसम्म पिपलको वृक्षमा प्वाल पारेको घैंटो झुण्डाइ दिनु र संकल्प पढ्नु ।।२२।।

त्यसैदिन सायंकालमा गोबरले लिपेको आंगनमा त्रिकाष्ठिक माथि बत्ती, पानी र

---

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा । द्वितीयेन तु कर्णाक्षिनासिकास्तु समासत:।। गलांसभुज-वक्षांसि तृतीयेन यथाक्रमात् ।। चतुर्थेन तु पिण्डेन नाभिर्लिंगगुदानि च । जानुजङ्घा तथा पादौ पञ्चमेन विधीयते ।। सर्वमर्माणि षष्ठेन सप्तमेन तु नाडय: । दन्तलोमाद्यष्टमेन वीर्यन्तु नवमेन च ।। दशमेन च पर्णात्वं तप्तताक्षद्विपर्यय:।।

एष दीपस्ते मया दीयते तवोपतिष्ठताम् ।। अद्यामुकगोत्रामुकप्रेत इदं पानीयं ते मया दीयते तवोपतिष्ठताम् ।। अद्यामुकगोत्रामुकप्रेत इदं पुष्पं ते मया दीयते तवोपतिण्ठताम् इति उत्सृजेत् । अनेन पश्य। इदं पिब । इदं परिधेहि इति वदेत् । कर्तृभोजनसमये पुटकादौ सघृतमन्नं कृत्वा अपसव्येन हस्ते जलं गृहीत्वा काकबलिं दद्यादनेन मन्त्रेण - काकोसि यमदूतोसि गृहाण बलिमुत्तमम् ।। यमद्वारे महाघोरे त्वमाप्यायितुमर्हसि ।।१।। यमाय धर्मराजाय मृत्यवे चान्तकाय च ।। दक्षिणां दिशमाश्रित्य प्रेतान्नं बलिमाहरेति पठेत् ।। सव्यं कृत्वा लवणादिविनैव घृतशर्करार्द्रसहितमन्नं स्वयं भुञ्जीत ।। इति प्रथमदिन-

पुष्प राखी प्रतिदिन गर्नु पर्दछ। आचमन गरी अपसव्य भएर तीन संकल्प भिन्न-भिन्न मूल अनुसार गरिदिनु र भन्नू यो हेर्नु हवस्, यो पिउनु हवस्, यो लगाउनु हवस् । अनि कर्ताले भोजन गर्ने वेलामा अपसव्य भएर हातमा जल लिई कालबलि दिनु - मन्त्र

कृत्यम् ।।२३।।

एवं प्रथमदिनकृत्यस्थानमागत्य स्नानादिदक्षिणादानान्तं प्रथमदिनवद्-द्वितीयादिदिनेष्वपि कुर्यात् ।। तत्र विशेषः ।। अद्येत्याद्यमुकगोत्रस्यामुक-प्रेतस्य जातिपुष्करनामनरकोत्तारणाय कर्णाक्षिनासिकावयवसंभूत्यै द्वितीयदिननिमित्तकपूरकपिण्डदानमहं करिष्ये ।। ततः पिण्डमादाय।। अद्याऽमुकगोत्रोऽमुकप्रेत जातिपुष्करनामनरकोत्तारणाय कर्णाक्षिनासिकावय-वसंभूत्यै एष द्वितीयपिण्डस्ते मया दीयते तवोपतिष्ठतामिति ।। ततः पिण्डप्रत्य-वनेजनम् ।। एता सतिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठतामिति सतिलतोयाञ्जलिः पिण्डोपरि दद्यात् । एते सतिलतोयपूर्णपुटपात्रे ते मया

---

मूलमा हेर्नु । अनि सव्य भएर नून बिना घिउ चीनी सित स्वयं खानू ।।२३।।

प्रथम दिन गरेकै स्थानमा गएर स्नानदेखि दक्षिणासम्म उही विधान गर्नु । त्यसमा विशेष आसन र पिण्डदानको संकल्प दोस्रो पिण्ड दिनु । सतिल अंजलि दिनु। सतिल

दीयेते तवोपतिष्ठतामिति द्वेतिलतोयपूर्णपुटपात्रे पिण्डसमीपे दद्यात् ।।२४।।

तृतीयदिने ।। अद्यामुकगोत्रेत्युक्त्वा हाहाकारनामनरकोत्तारणाय गलांसभुजवक्षःपूरकस्तृतीयपिण्डस्ते मया दीयते तवोपतिष्ठताम् ।। एते सतिलतोयाञ्जलयस्ते मया दीयन्ते तवोपतिष्ठन्तामिति त्रीन् सतिलतोयाञ्जलीन् पिण्डोपरि दद्यात् ।। एतानि सतिलतोयपूर्णपुटपात्राणि ते मया दीयन्ते तवोपतिष्ठन्तामिति त्रीणि तिलतोयपूर्णपुटपात्राणि पिण्डसमीपे दद्यादिति विशेषः।।२५।।

चतुर्थदिने ।। तामिस्त्रनामनरकोत्तारणाय नाभिलिङ्गगुदपूरकश्चतुर्थ-

---

तोयपूर्ण पात्र पनि मूल अनुसार गर्नू ।।२४।।

अब तेस्रो दिन - मूल अनुसार संकल्प गरी आसन र पिण्डदान गरी सतिल तोयांजलि र सतिल जलपूर्ण पात्र र लौहदक्षिणा दिनु ।।२५।।

पिण्डः।। चत्वारः सतिलतोयाञ्जलयः।। चत्वारि सतिलतोयपूर्ण-पात्राणि।। तिलतोयाञ्जलीनां तिलतोयपात्राणाञ्च तृतीयदिनवच्चतुर्थदिनादौ वाक्यं कुर्यात् ।।२६।।

पञ्चमदिने ।। अन्धतामिस्त्रनामनरकोत्तारणाय जानुजङ्घापाद- पूरकः पञ्चमः पिण्डः ।। पञ्चतिलतोयाञ्जलयः पञ्चतिलतोयपात्राणि।।२७।।

षष्ठदिने।। जातिसंस्त्रवनामनरकोत्तारणाय सर्वमर्मपूरक षष्ठः पिण्डः।

---

अब चौथो दिन- केवल संकल्पमा केही फरक छ, मूलमा हेर्दै लानु । चार सतिल तोयांजलि, चार तोयपात्र, अरु तृतीय दिन जस्तै गर्दै गए हुन्छ।।२६।।

अब पाँचौं दिन पनि दुई संकल्प आसन र पिण्डदानको मूल अनुसार नर्गु । पाँच अंजलि, पाँच तिल तोयपात्र र अन्य सबै पूर्वबाट ।।२७।।

अब छैठौं दिन - सबै कृत्य अघिल्लो दिन जस्तै गर्नु तर प्रतिज्ञा र पिण्डदानको

षट्तिलतोयाञ्जलयः ।। षट्तिलतोयपात्राणि ।।२८।।

सप्तमदिने ।। अमेध्यकृमिनामनरकोत्तारणाय सर्वनाडिपूरकः सप्तमपिण्डः।। सप्ततिलतोयाञ्जलयः।। सप्ततिलतोयपात्राणि ।।२९।।

अष्टमदिने।। पुरीषभक्षनामनरकोत्तारणाय दन्तलोमादिपूरक अष्टम-पिण्डः।। अष्टौ तिलतोयाञ्जलयः अष्ठौ तिलतोयपात्राणि ।।३०।।

नवमदिने ।। स्वमांस भक्षनामनरकोत्तारणाय वीर्यपूरक नवम-

संकल्प मूलमा छ, त्यही अनुसार गरिदिनु ।।२८।।

अब सातौं दिन - अमेध्यकृमिनामनरकोत्तारणाय सर्वनाडीपूरकः भनेर पिण्ड दिनु। सात अंजलि सात तिलतोयपात्र, लौहदक्षिणाआदि पहिले दिन जस्तै।।२९।।

अब आठौं दिन- संकल्प मूल अनुसार गरेर पिण्ड दिनु, अनि आठ अंजलि, आठ तिल तोयपात्र र अरू सवै पूर्ववत् गर्नु ।।३०।।

अब नवाँ दिन - आसन र पिण्डदानको संकल्प वाहेक अरू सबै कृत्य पहिले गरे जस्तै

पिण्डः।। नवतिलतोयाञ्जलयः।। नव तिलतोयपात्राणि ।। नवमे वाससां त्याग इत्युक्तत्वात्।। तस्मिन्दिने वासप्रक्षालनं च कार्यम् ।। कर्तुर्दशमदिने वा ।। दशमदिने कुम्भीपाकनामनरकोत्तारणाय पूर्णतातृप्तताक्षुद्धिपर्ययहेतुको दशमःपिण्डः ।। दशतिलतोयाञ्जलयः ।। दशतिलतोयपात्राणि।। एवं पञ्चाशत्तिलतोयाञ्जलयः क्रमात् ।। तावन्ति तिलतोयपात्राणि संयुक्तानि तिलैःसहेति ब्रह्मपुराणवचनात् ।। दशमेऽहनि पिण्डं समाप्यारण्यं गत्वा कृतश्मश्रुकर्माणः स्पृष्टान्युत्सृज्य तिलकल्कगौरसर्षपैः शिरःस्नात्वा अहतवाससः शुक्लवाससो वा गोहिरण्यादीनालभ्य प्रविशेरन् ।। अस्मिन्दिने ब्राह्मणादीनां पञ्चगव्य प्राशनम् ।।

अथाऽस्थिसंचयनविधिः, ब्रह्मपुराणे ।। कुर्यात् तृतीये विप्रस्य चतुर्थे

---

गर्नु पर्दछ। यसै दिन लुगा धुने पनि चलन छ। कर्ताले दशौं दिन गरे पनि हुन्छ ।।३१।।

अब दशौं दिन - पिण्डको संकल्प मूल अनुसार गरेर अन्य सबै पहिले जस्तै गरेर

क्षत्रियस्य तु । पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि ।। अस्थि-
संचयप्रेतस्य क्रियते देशगौरवात् ।। द्वितीयेप्यस्थिसंचय इति क्वचित्।।
विष्णुः- चतुर्थदिवसेऽस्थिसंचयनं कुर्यात् तेषां गंगाम्भसि प्रक्षेप इति।
व्यवस्था च सूत्रानुसारेण वा ज्ञातव्या तथा ।। त्र्यहाशौचे द्वितीयेऽह्नि
कर्त्तव्यस्त्वस्थिसंचयः।। सद्यः शौचे तत्क्षणन्तु कर्तव्य इति निश्चयः।।
कर्त्तव्यन्तु नरैः श्राद्धं देशकालाविरोधतः ।। श्राद्धमस्थिसंचयनश्राद्धम्।।
तच्च अस्थिसंचयनात् पूर्वं संचयनानन्तरं वा कुर्यात् ।। आमश्राद्धे

प्रतिदिनको कार्य समाप्त गर्नु । अनि आफ्नू पहिलेको चलन अनुसार ढिकुरो फुटाउँदा छोरोले पिताको भए शिरले घुचेटेर हातले माटो धूलो पारी बत्ती मुनि राखिएको सप्त-धान्य पछाडि फर्केर ढिकुरोमा छरिदिनु । अनि एउटा सिधा त्यसै माथि राखिदिनु, कसै कसैले सुन वा चाँदीको कोदाली बनाएर ढिकुरो फोर्ने पनि चलन पाईन्छ। त्यसपछि सबै वस्तु जलमा बगाइदिनु र मुण्डन गरेर स्नान गरी स्वच्छ लुगा लगाएर गाई र ब्राह्मणलाई छोई, पंचगव्य खाएर घर जानू । अरु पनि आफ्नू परम्परा अनुसार गरे

यवचूर्णेन पिण्डः कर्तव्यः।।३२।।

अथ प्रयोगः।। कर्ता स्नानादिकं विधाय श्राद्धभूमिं सर्षपैस्तिलैश्चाव कीर्य रक्षादीपं संस्थाप्य श्राद्धे देयानि वस्तुन्यासाद्याऽऽचम्य पूर्वाभिमुख उपविश्य, अपवित्रः पवित्रो वेत्यादि पठित्वा पुण्डरीकाक्षः पुनात्विति श्राद्धाय द्रव्याणि कुशतिलजलेन सिञ्चेत् । ततः कुशतिलजलान्यादाय। अद्यामुकगोत्रस्यामुकप्रेतस्यास्थिसंचयननिमित्तकमेकोदिष्टश्राद्धमहं करिष्ये

---

हुन्छ। यसमा कुनै शास्त्रीय प्रमाण छैन।।३२।।

अब अस्थिसंचयन विधिः- कसैले तेस्रो दिन वा कोही चौथो दिन यो श्राद्ध गर्दछन्। ब्राह्मणको तेस्रो दिन र चौथो दिन क्षत्रियको गर्ने प्रमाण छ। श्राद्ध गर्ने दिन स्नानादि सकेर जनै फेरी नयाँ वस्त्र पहिरनु पर्दछ । यसमा ब्रह्मपुराणको वचन मूलमा हेर्नु।।३३।।

प्रयोगः- श्राद्ध गर्ने दिन कर्त्ताले स्नानादि गरेर श्राद्धस्थानमा आई पहिले सरस्यूँ चारैतिर छरी, बत्ती बाली, आचमन गरी, पूर्व फर्केर अपवित्रः० मन्त्र पढी श्राद्ध गर्ने

इति संकल्पं कुर्यात् ।। ततो देवताभ्यः इति त्रिः पठेत् ।। ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य इदमासनं ते मया दीयते तवोपतिष्ठतामिति कुशरूपमासनं दद्यात्।। ततः पुटके प्रादेशमात्रं कुशपत्रद्वयात्मकं पवित्रं पवित्रेस्थ इति मंत्रेण दक्षिणाग्रान्धृत्वा ।। गन्धद्वारामिति मंत्रेण गन्धम् ।। श्रीश्चत-इतिमंत्रेण पुष्पं च क्षिपेत् ।। ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रं पुष्पमन्नपात्रोपरि नमोनारायणयेति मंत्रेण उत्तराग्रं धृत्वा ।। या दिव्या आपः पयसा इत्यादिनाऽर्घपात्रस्थजलमभिमंत्र्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेतैष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि अर्घजलं दद्दुत्सृजेत्।। ततः पवित्रसहितमर्घपात्रमासनवामपार्श्वे प्रेतायस्थान-

---

वस्तुमा र सबैतिर जल छर्किदिनु । अनि त्यहीं कुश-तिल लिएर संकल्प गर्नु। अनि अपसव्य भएर दक्षिण फर्की बायाँ घुँडा मोडेर संकल्प गरी आसन दिनु अनि एउटा

मसीति उत्तानमेव स्थापयेत् ।।३४।।

ततोऽभ्यर्च्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेत एतानि गन्धपुष्पधूपदीपनैवेद्यपूगीफलवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत् ।। ततः चतुष्कोणं मण्डलं विधाय श्राद्धीयान्नमग्रभागं- आमान्नं घृततिलमधुजलयुतमादाय इदमन्नं सजलमेतद्भूस्वामपितृभ्यो नम इत्युत्सृजेत्।। अथान्नसंकल्पः।। सोपस्करतिलघृतमधुजलयुतमन्नमुपनीय मधुनाभिधार्य पात्रालम्भनाऽवगाहनं विना पृथ्वी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा।। इदं विष्णुर्विचक्रमे त्रेधानिदधे

दुनामा पवित्र फूल आदि हालेर अर्घपात्र बायाँ हातमा लिई दाहिने हातले 'नमो नारायणाय' भनेर बाहुनमा घुमाई 'या दिव्या० मन्त्र पढेर दुना ढाकी बाहुनमा राखेको फूल पवित्र फेरि दुनामा 'राखी प्रेताय स्थानमसि' भनेर बाहुनको पछाडि उत्तानो राखिदिनु ।।३४।।

अनि बाहुनको पूजा गरेर तिल कुश लिई संकल्प गरिदिनु । अनि चारपाटे मण्डल

पदम् ।। समूढमस्यपांॅसुरे इति पठित्वा ।। अपहताऽअसुरारक्षांॅसि वेदिषद इति तिलानन्नोपरि विकीर्य।। कुशादीन्यादाय ।। अद्यामुकगोत्रायामुकप्रेताय इदं सोपस्करमन्नं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत्।। ततो मधुव्वाता इत्यादि ऋचां पाठः- मधु मधु मध्विति ।। अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्।। तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ।। नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः इति श्लोकं पठेत्।।३५।।

बनाएर एउटा सीधा राखी तिल घिउ मह जल छरी इदमन्नं० भनेर भूस्वामीलाई दिनु । अनि अन्न संकल्प- तिल घिउ मह छरी 'पृथिवी ते पात्रं०' र 'इदं विष्णु०' पढी अपहताऽ-असुरा० यस मन्त्रले सीधाको वरिपरि तिल छर्किदिनु । अनि मूल अनुसार संकल्प पढेर भूमिमा छाडिदिनू । अनि मधुव्वाता० तीन मन्त्र र अन्नहीनं० आदि मन्त्र पढिदिनु ।।३५।।

ततोऽन्नपात्र समीपे पिण्डदानार्थं मृत्पिण्डिकां विधाय तत्र रेखोल्मुकभ्रमणं विना छिन्नमूलकुशानास्तीर्यकुशजलान्यादाय अद्यामुकगोत्रामुकप्रेतास्थिसञ्चयनश्राद्धे पिण्डस्थाने इदमवनेजनन्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनं दद्यात् । ततो घृतमधुतिलयुक्तान्नेन पिण्डं निर्माय जलतिलकुशसहितं पिण्डमादाय ।। अद्यामुकगोत्रामुकप्रेतैष पिण्डस्ते मयादीयते तवोपतिष्ठतामिति अवनेजनस्थाने पिण्डं दद्यात्।। तत आस्तृत कुशमूलेन करं प्रोक्ष्य पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।। सव्यं

अनि पिण्ड दिने वेदी बनाई कुश बिछाई त्यसमा रेखा र आगो घुमाउने कार्य हुँदैन। अनि संकल्प पढेर आसन दिई तिल, घिउ, मह मिसाएको पिण्ड लिई संकल्प गर्दा ॐ अद्यामुक० देखि 'तवोपतिष्ठताम्' सम्म पढेर पितृतीर्थले पिण्ड राखिदिनु । वेदीमा बिछाएको कुशले हात पुछेर पिण्डशेष ल्याएर नगीचै राखिदिनु । अनि सव्य भएर आचमन गरी अपसव्य भएर सूर्यरूपी प्रेतको ध्यान गरोस् । अनि संकल्प लिएर

कृत्वाऽऽचम्य अपसव्यं कृत्वा तूष्णीं भास्करमूर्तिं प्रेतं चिन्तयेत्।। ततः कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेतेदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् ।। ततो नीविं विस्रंस्य सव्यं कृत्वाऽऽचम्य अपसव्यं कृत्वा वामहस्तेन सूत्रमादाय कराभ्यां गृहीत्वा प्रेतैतत्तेवास इति सूत्रं पिण्डोपरि धृत्वा ।।३६।।

गन्धपुष्पादिना पिण्डं सम्पूज्य कुशादीन्यादय ।। अद्यामुकगोत्रा-मुकप्रेतास्थिसंचयनश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत्, ततः शिवा आपः-

---

प्रत्यवनेजन दिनु । कम्मरमा केही न घुसारेको भए पनि हातले छोइदिनु । भव्य भएर आचमन गरी अपसव्य भई 'प्रेतैतत्ते वास० भनेर पिण्डमा सूत्र चढाइदिनु ।।३६।।

अब पिण्डको पूजा गरेर संकल्पमा अद्या० देखि 'उपतिष्ठनाम्' सम्म पढ्नु, अनि

सन्तु इति जलम् ।। सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्तु इति तण्डुलान् अन्नपात्रोपरि क्षिपेत् ।। ततः कुशादीन्यादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्यास्थिसञ्चयनश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दत्वा।। सव्यं कृत्वा दक्षिणां दिशं पश्यन् अघोरः प्रेतोस्तु इति पूर्वाग्रां जलधारां दद्यात् ।। ततोऽपसव्यं कृत्वा सपवित्रान्कुशानास्तीर्य पुटकस्थ जलादिना इदमूर्जन्ते मया दीयते तवोपतिष्ठतामिति सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् ।। ततः पिण्डमाघ्रायोत्थापयेत् छिन्नमूलकुशानग्नौ दहेत् ।। अर्घपात्रं संचाल्य ।। सव्येन कुशादिसहित दक्षिणाद्रव्यमादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्यास्थिसंचयन-

शिवा आपः पढेर जल, सौमनस्य० पढेर फूल, अक्षतं० पढेर अक्षता, बाहुनमा चढाउनु । अब संकल्प पढ़ेर अक्षय्योदक दिनु । सव्य भएर दक्षिणातिर हेरी 'अघोरः प्रेतोस्तु' भनेर जल धारा पिण्डमा दिनु । अनि बाहुनको पछाडि राखेको दुनाबाट पवित्र

श्राद्धप्रतिष्ठार्थमिदं रजतं चद्रदैवतं तन्निष्क्रयं द्रव्यं वा यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात्।। अपसव्यं कृत्वा दीपमाच्छाद्य। हस्तौ पादौ प्रक्षाल्यऽऽचम्येति इद पठेत् प्रामादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।। इति पठित्वा विष्णुं स्मरेत् ।। श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षितेत् ।।३७।।

स्त्रिया अपि सर्वं पुरुषैकोद्दिष्टवद्भवति परन्तु प्रतिज्ञाऽऽसनदक्षिणा-

ल्याई पिण्डमा चढाइदिनु । अनि 'इदमूर्जन्ते० भनेर दूधको धारा पिण्डमा चढाउनु । अनि ढोगेर वास्ना लिई पिण्ड उठाउनु । वेदिकाको कुश आगोमा हालिदिनु । अर्घपात्र चलाई दिनु । सव्य भएर बाहुनको दक्षिणा संकल्प गरिदिनु। अपसव्य भएर बत्ती ढाकिदिनु । सव्य भएर हात-पाउ पखाली आचमन गरेर पुरोहितले पढि दिनु प्रमादात्० । श्राद्ध सामग्री ब्राह्मणलाई दिनु वा जलमा बगाइदिनु ।।३७।।

स्त्रीको पनि सबै पुरुष जस्तै गर्नु तर प्रतिज्ञा, आसन, दक्षिणा आदि गोत्रायाः, प्रेतायाः र अन्न संकल्पमा गोत्रायै प्रेतायै भन्नु, अन्य सबै ठाउँमा गोत्रे, प्रेते भन्नु पर्दछ।

दानवाक्येषु अमुकगोत्रायः अमुकप्रेतायः इति। अन्नसंकल्पे तु अमुकगोत्रायै अमुकप्रेतायै इति अन्यत्र सर्वत्र अमुकगोत्रायाः मुकप्रेतायाः इति विशेष उह्यः ।। इत्यस्थिसंचयनश्राद्धविधिः।।३८।।

अथ पाथेयश्राद्ध प्रयोगः ।। कर्त्ता स्नानं विधाय श्राद्धभूमिं सर्षपैः तिलैश्चावकीर्य रक्षादीपं संस्थाप्य श्राद्धे देयानि वस्तून्यासाद्य आचम्य पूर्वाभिमुख उपविश्य अपवित्रः पवित्रो वेति पठित्वा पुण्डरीकाक्षः पुनातु इति श्राद्धीयद्रव्याणि कुशजलैः सिञ्चेत् ।। ततः कुशतिलजलान्यादाय अद्येत्यादि देशकालौ स्मृत्वा अमुकगोत्रस्याऽमुकप्रेतस्य मनुष्यलोकात्प्रेत-

---

इति अस्थिसंचयन श्राद्धविधिः।।३८।।

### अथ पाथेयश्राद्ध विधिः

यो श्राद्ध पनि सबै अस्थिसंचयन श्राद्ध जस्तै हो, केवल 'अस्थिसंचयने' भनेको स्थानमा 'पाथेयश्राद्धे' भन्ने प्रयोग गर्नुपर्दछ ।

इति पाथेय श्राद्धं सम्पूर्णम ।

लोकगमनार्थं पाथेयश्राद्धमेकोद्दिष्टविधिनाऽहं करिष्ये इति संकल्पं कुर्यात्। ततो देवताभ्यः इति त्रिः पठेत् ।। ततोऽपसव्येन दक्षिणाभिमुखः पातितवामजानुः कुशादिकमादाय अद्याऽऽमुकगोत्रस्यामुकप्रेतस्येदमासनं ते मया दीयते तवोपतिष्ठतामिति कुशरूपमासनमुत्सृजेत् । ततः पुटके प्रादेशमात्रं कुशपत्रद्वयात्मकं पवित्रं पवितं पवित्रेस्थ इति मंत्रेण दक्षिणाग्रां धृत्वा ।। शन्नो देवीति जलम् ।। तिलोसीति तिलान् ।। गन्धद्वारामिति गन्धम्।। श्रीश्चतेति पुष्पं क्षिपेत्।। ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रं सपुष्पमन्नपात्रोपरि नमोनारायणायेति मंत्रेणोत्तराग्रं धृत्वा या दिव्याऽआप इति अर्घपात्रस्थजलमभिमंत्र्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेत-पाथेयश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।। ततः पवित्रसहितमर्घपात्रमासनस्य वामपार्श्वे प्रेताय स्थानमसीत्युत्तानमेव स्थापयेत्।। ततो गन्धादिभिरभ्यर्च्य कुशादिक-

मादाय अद्यामुकगोत्रामुकप्रेत एतानि गन्धपुष्पाक्षतधूपदीपनैवेद्यपूगीफलवासो नैवेद्यादिनि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत्।। ततः चतुष्कोणं मण्डलं विधाय श्राद्धीयमामान्नाग्रभागं घृततिलजलयुतमादाय इदमन्नमेतद्भूस्वामिपितृभ्यो नम इत्युत्सृजेत् ।। ततो व्यञ्जनमधुघृतजलयुतमन्नमुपनीय पात्रालम्भनाऽवगाहनं विना ।। पृथ्वी ते पात्रं द्यौरपिधानं ब्रह्मणस्यमुखे अमृते अमृतंजुहोमि स्वाहा ।। इदं विष्णुरिति सुरेत्यन्तं पठित्वा अपहता असुरारक्षा छ सिव्वेदिषदः इति तिलानन्नोपरि क्षिप्त्वा कुशादिकमादाय अद्यामुकगोत्रायामुकप्रेताय पाथेयश्राद्धे इदमामान्नं सोपस्करणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ।। सव्येन।। मधुव्वातादि ऋचं पठित्वा मधु ३ इति च त्रिःपठेत्।। अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।। तत्सर्वमछिद्रमस्तु भास्करस्य प्रसादतः। नमस्तभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे । नमः पिनाकहस्ताय

वज्रहस्ताय वै नमः।। इति श्लोकं च पठेत् ।। अत्र विकिरनिषेधः ततोऽपसव्येनान्नपात्रसमीपे पिण्डदानार्थं पिण्डिकां विधाय तत्र रेखोल्मुक-भ्रमणं विना छिन्नमूलकुशान्नास्तीर्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेत पाथेयश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठता-मित्यास्तृतकुशोपरि अवनेजनं दद्यात् ।। ततो मधुघृततिलयुक्तान्नेन पिण्डं निर्माय जलतिलकुशसहितपिण्डमादाय अद्यामुकगोत्रामुकप्रेतपाथेयश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामित्यवनेजनस्थानोपरि पिण्डं दद्यात् ।। ततः आस्तृतकुशमूलेन करं प्रोक्ष्य पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।। सव्यं कृत्वाऽऽचम्य अपसव्यं कृत्वा तूष्णीं प्रेतं भास्करमूर्तिं ध्यायेत् ।। ततः कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेत इदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् ।। ततो

नीवीं विस्त्रंस्य। सव्यं कृत्वाऽऽचम्य अपसव्यं कृत्वा। वामहस्तेन सूत्रमादाय कराभ्यां गृहीत्वा प्रेतैतत्ते वास इति सूत्रं पिण्डोपरि धृत्वा गन्धपुष्पादिना पिण्डं सम्पूज्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेत पाथेयश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामिति गन्धादिकमुत्सृजेत् ।। ततः शिवा आपः सन्तु इति जलम् ।। सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्तु इति तण्डुलान्तदन्नपात्रोपरि निक्षिपेत्।। ततः कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य पाथेयश्राद्धे तत्तैतदन्न-पानादिकमुपतिष्ठतामित्यक्षय्योदकं दत्वा सव्यं कृत्वा दक्षिणां दिशं पश्यन् अघोरः प्रेतोस्तु इति पूर्वाग्रां जलधारां दत्वा ।। ततोऽपसव्यं कृत्वा सपवित्रकुशोपरि दक्षिणाग्रां पयोधारां दद्यात् ।। ततः पिण्डमाघ्रायोत्थापयेत् ।। छिन्नमूलकुशानग्नौ दहेत् ।। ततोऽर्घपात्रं

संचाल्य सव्येन कुशतिलसहितदक्षिणाद्रव्यमादाय अद्याऽमुकगोत्रस्या-
मुकप्रेतस्य मनुष्यलोकात्प्रेतलोकगमनार्थं पाथेयश्राद्धप्रतिष्ठासांगता-
सिद्ध्यर्थं दक्षिणां रजतं चन्द्रदैवतं तन्निष्क्रयं द्रव्यं ताम्रं सूर्यदैवतं यथा
नामगोत्राय यथा नामशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे इति दक्षिणां
दद्यात् ।। अपसव्यं कृत्वा दीपमाच्छाद्य ।। सव्येन हस्तौ पादौ
प्रक्षाल्याऽऽचम्य।। प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।। स्मरणादेव
तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः । इति विष्णुं स्मृत्वा श्राद्धीयवस्तूनि
ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् ।।३९।।

।।इति पाथेयश्राद्धं सम्पूर्णम् ।।

अथैकादशाहे कर्तव्यता।। तत्र मत्स्यपुराणे । आशौचान्त द्वितीयेह्नि शय्यां दद्याद्विचक्षणः ।। काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम् ।। पूजयेद् द्विजदम्पत्यान् नानाभरणभूषणैः।। वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा ।। तथा ।। द्वादशाहे यदा कुर्यात्पितुः पुत्रः सपिण्डनम्।। एकादशेऽह्नि कुर्वीत प्रेतश्राद्धानि षोडश ।। याज्ञवल्क्यः ।। यस्यैतानि न दीयन्ते प्रेतश्राद्धानि षोडशः।। पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि। तानि च ।। मासिकानि दशैकं च आद्ये द्वे ह्यर्द्धमासिकम् ।। ऊनाब्द-मूलषण्मासं प्रेतश्राद्धानि षोडश ।। आद्य द्वे आद्यमासिकोनमासिके। अर्द्धं त्रैपाक्षिकं। जातूकर्ण्योपि। द्वादशाःप्रतिमास्यानि आद्य षाण्मासिके तथा ।। त्रैपाक्षिकाब्दिके चेति श्राद्धान्येतानि षोडशः ।। अत्र द्वादश-प्रतिमास्यानीत्यभिधानादाद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषाण्मासि-कोनाब्दिकपराः एतेषां नियतःकालः शातातपेनोक्तः ।। मृतेऽहनि तु

कर्तव्यं प्रतिमासन्तु वत्सरम् ।। प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि।। अत्र प्रतिमासं प्रतिसंवत्सरं चेत्यभिधानादाद्यमेकादशेऽहनि इत्युक्तत्वा-दाद्यमासिकमाद्याब्दिकं चैकादशेहन्येव कुर्यात् ।। अनेनैवाभिप्रायेण गोभिलोऽप्याद्यस्य द्विरावृत्तिमाह ।। ब्राह्मणं भोजयेदाद्ये होतव्य-मनलेऽथवा।। पुनश्च भोजयेद्विप्रान् द्विरावृत्तिर्भवेदिति।। क्षत्रियादिरपि आद्यं श्राद्धमेकादशेन्ह्येव कुर्यात् ।। तदाह वृद्धवसिष्ठः ।। एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।। चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथक् ।। लौगाक्षिरपि ।। आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।। कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः।। पैठीनसिः ।। सपिण्डी-करणादर्वाक्कुर्याच्छ्राद्धानि षोडशः ।। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ।। सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः।। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्सतान्यपि।। शाठ्यायनः ।। सपिण्डीकरणादर्वाक्

अपकृष्य कृत्यान्यपि ।। पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ।। वृद्धिश्राद्धान्तरं तन्निषेधादित्यर्थः ।।तथा।। नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडशः ।। एकेनैव तु कार्याणि संविभक्तधनेष्वपि ।। शातातपोऽपि।। सपिण्डीकरणं यावत्प्रेत श्राद्धानि षोडशः ।। पृथङ्नैव सुताः कुर्युः पृथक्द्रव्या अपि क्वचित् । तत्र च यथांशं सर्वैर्द्रव्यं देयम् ।। सद्यः शौचे तु शंखः ।। सद्यः शौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।। स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ।। पिण्डोदकादिष्विति वा पाठः।। एकाहाशौचे तु दशाहकृत्यं तस्मिन्नेवाऽहनि द्वितीये चैकादशाहः इति ढुंढुपद्धतौ ।। त्र्यहाशौचे तु चतुर्थेऽहनि एकादशाहः। नव श्राद्धमासिकयो विघ्ने कण्वः ।। नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत्।। तत्तुदुत्तर सातंत्र्यादनुष्ठेयं प्रचक्षते ।। उत्तरसातंत्र्यं उत्तरेण समानकालत्वं तस्मादित्यर्थः ।। नव श्राद्धमाश्वलायनशाखिनाम् ।। तथा च

शिवस्वामिः।। नव श्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।। आपस्तम्बः।। षडित्याहुर्विभाषा तैत्तिरीयकाः एकादशाह व्यतिरेकेण पञ्च ।। यतिषु शातातपः ।। एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।। न कुर्यात् पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ।। उसना ।। एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ।। तथा च। आशिषाद्विगुणादर्भाजयाशीः स्वस्तिवाचनम् ।। पितृशब्दः स्वसम्बन्धः शर्म्मशब्दस्तथैव च ।। पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम्।। तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ।। प्रदक्षिणाविसर्गश्च सीमान्त-गमनं तथा ।। अष्टादशपदार्थाश्च प्रेतश्राद्धे विवर्जयेत् ।। प्रेतश्राद्धे न विकिर इति स्मृतिरत्नावल्याम् ।। तथा च ।। प्रेतश्राद्धे तु यत्पात्रमर्घ्यार्थं परिकल्पितम् ।। तस्यैवोत्तानता प्रोक्ता शेषेषु न्युब्जता मता।। आश्वलायनः।। प्रेतश्राद्धेषु सर्वेषु न स्वधा नाभिरम्यताम् ।। स्वस्त्यस्तु

विसृजेदेवं सकृत्प्रणववर्जितम् ।। एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते ।। पितृशब्दं न कुर्वीत पितृहा चोपजायते ।। अनुशब्दः सामगानाम्।। पितृशब्देन अत्र पितरः।। नमो वः० ऊर्ज्ज इति मन्त्र पाठनिषेध इति सुगतिकृत् ।। वाराहपुराणे ।। अस्तं गते तथाऽऽदित्ये गत्वा विप्र-निवेशनम् ।। दत्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम्।। पादौ प्रक्षाल्य तैलेन प्रेतस्य हितकाम्यया।। प्रभातायान्तु सर्वर्यामुदिते च दिवाकरे।। कारयित्वा श्मश्रुकर्म नखच्छेदं ततः परम् ।। स्नापनाभ्यञ्जने च दद्याद्विप्राय विधिपूर्वकम् ।। इत्युक्तत्वात्पूर्वदिने श्राद्धार्थं द्विजनिमन्त्रणं कर्त्तव्यम् ।। तत्र कूर्मः ।। आशौचान्तदिने हविष्यमेकवारं भुक्त्वा रात्रौ विप्रनिवेशनं गत्वा त्रीनेकं ब्राह्मणमुदङ्मुखमुपनिवेश्य कृतापसव्यो दक्षिणाभिमुखः पातितवामजानुः । गतोऽसि दिव्यलोकं त्वं कृतान्त-

यहाँ सम्म अनेक ऋषि मुनिहरूको मत वर्णन गरिएको छ । यो सबै कलियुगमा

विहितात्पथः।। मनसा वायुभूतेन विप्र त्वाहं नियोजये।। पूजयिष्यामि भावेनेति प्रेतोद्देशेन पठित्वा ।। पुष्पचन्दनपूगीफलानि विप्रहस्ते दत्वा ब्राह्मणदक्षिणजानु स्पृष्ट्वा ।। अद्यास्यां रात्रावमुकगोत्रास्यामुकप्रेतस्य श्व आद्यमासिकश्राद्धकरणाय भवन्तं ब्राह्मणमभिमन्त्रये ।। आमन्त्रितोऽस्मीति ब्राह्मणेनोक्ते ।। अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः ।। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।। सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।। भवद्भिश्चः भवितव्यं स्वस्तये श्राद्धकर्मणि इति ब्राह्मणमुद्दिश्य पठेत् ।। यद्यविघ्नेयं रजनी याति तदा सर्वमेतत्करिष्यामीति तेनोक्ते विप्रं नमस्कृत्य प्रेतहितमुद्दिश्य तिलतैलेन जानुविप्रपादौ प्रक्षालयेत् । अत्र स्त्रिया अपि गतोसीति अविकृतमेव पठनीयम् ।। आत्मत्त्वेनोद्दिश्यत्वात् ।।४०।।

लुप्तप्रायः भइसक्यो, केवल पुस्तकमा मात्र देखिन्छ ।।४०।।

अथैकादशाहे क्रियाक्रमः।। अथ प्रातर्नदीं जलाशयान्तरं वा गत्वा पात्रब्राह्मणस्य श्मश्रुकर्म, नखच्छेदनं च कारयित्वा ताम्रपात्रेण स्नानोपकरणं तैलोद्वर्तनं च दत्वा स्वयं च स्नात्वा श्वेतवस्त्रं परिधाय जलाशयसमीपे गृहे वा श्राद्धभूमिं प्रकल्प्य तां संशोध्य गौरमृत्तिकयाऽऽच्छाद्य गोमयेनोपलिप्य पंचगव्येनाभ्युक्ष्य तिलसर्षपाँश्च विकिरेत् ।। आस्तृतपाकस्थाने तिलान्विकीर्य तत्र सपिण्डनद्वारा नूतनमृन्मयभाण्डे ताम्रपात्रादिभिर्वा पाकं कारयितुमारभ्योदङ्मुखाय ब्राह्मणाय शय्यां दद्यात् ।। तत्र क्रमः।। कर्ता आचम्य पूर्वाभिमुखः सव्येन। सोपस्करणशय्यायै नमः।। ब्राह्मणाय

---

४१. *अब एकादशाहको विधि-* कर्ताले प्रातः नदी वा जलाशयमा गएर पात्र-ब्राह्मणको कपाल खौरन र नङ काट्न लगाई स्नान गर्न तेल बुकुवा दिनु र आफूले पनि स्नान गरी स्वच्छ वस्त्र पहिरेर जलाशयमा नै वा घरमा श्राद्धभूमि ठिक्क पारेर गोबरले लिपी पंचगव्य छर्की, नयाँ माटोको पात्रमा पिण्ड पकाउनु र आफूतिर फर्केका ब्राह्मणलाई

नमः इति देयब्राह्मणं त्रिः सम्पूज्य वारिणा शय्यामभिषिच्य कुशतिलजलान्यादाय ।। अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्य स्वर्गप्राप्तिकाम इमां सोपस्करणशय्यां विष्णुदैवताममुकगोत्रायाऽमुक-शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।। इत्युक्त्वा दद्यात् ।। प्रार्थना । यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या अस्याऽप्यशून्याऽस्तु तस्माज्जन्मनि जन्मनि ।। ततो दानप्रतिष्ठा ।। कुशतिलजलसहितं दक्षिणाद्रव्यमादाय ।। अद्यकृतैतत्सोपकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय भूयसीं दक्षिणां तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात् ।। प्रतिग्रहीता स्वस्तीत्युक्त्वा

शय्यादान दिनु। त्यसमा कर्ता सव्य भएर आचमन गरी पूर्व फर्केर 'सोपस्करण शय्यायै नमः'। 'ब्राह्मणाय नमः' भनेर ब्राह्मण र शय्याको पूजा गरी संकल्प मूल अनुसार पढ्नू। अनि प्रार्थना र दान प्रतिष्ठा गर्दा संकल्प मूलमा हेर्नु । अनि दान थापनेले 'स्वस्ति'

शय्यां स्पृशेत् ।।४१।।

अथ कांचनपुरुषदानम् ।। आचम्य ।। फलवस्त्रसमन्वितकाञ्चनपुरुषाय नमः।। ब्राह्मणाय नमः इति देयब्राह्मणं त्रिःसम्पूज्य।। कुशादीन्यादाय अद्याशौचान्त द्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्य स्वर्गप्राप्तिकामः इमं फलवस्त्रसमन्वितं काञ्चनपुरुषं विष्णुदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । स्वस्तीति प्रतिवचनम् ।। ततो दक्षिणा-द्रव्यादिकमादाय।। अद्यकृतैतत्फलवस्त्रसमन्वितकाञ्चनपुरुषदानप्रतिष्ठार्थ-मिदं हिरण्यमग्निदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं

---

भनेर शय्यालाई छुनु ।।४१।।

*अब कांचन - पुरुष दानमा* - आचमन गरी फल-वस्त्र र 'ब्राह्मणाय नमः' भनेर ब्राह्मणको पनि पूजा गर्नू, अनि संकल्पमा *तुभ्यमहं सम्प्रददे* सम्म पढ्नू । दान थाप्नेले 'स्वस्ति' भन्नु। अनि दान प्रतिष्ठाको संकल्प र भूयसी दक्षिणा पनि दिनु पर्दछ ।

संप्रददे इति दक्षिणां दद्यात् ।। प्रतिग्रहीता स्वस्तीत्युक्त्वा काञ्चनपुरुषं स्पृशेत् ।।४२।।

अथ द्विजदम्पतीपूजनम् ।। आचम्य।। कुशतिलजलान्यादाय।। अद्याशौचान्तद्वितीयेह्नि अमुकगोत्रस्याऽमुकप्रेतस्य स्वर्गप्राप्तिकामो द्विजदम्पतीमहं पूजयिष्ये ।। इति संकल्प्य द्विजदम्पतिं पूजयेत् ।। तत्र क्रमः।। इदमासनं द्विजदम्पतिभ्यां नमः।। एषोऽर्घो द्विजदम्पतिभ्यां नमः।। इदमनुलेपनं द्विजदम्पतिभ्यां नमः।। एवं धूपदीपनैवेद्यपूगीफल-सिन्दूरभूषणवासांसि द्विजदम्पतिभ्यां नमः इति दद्यात् ।। ततो नमस्कुर्यात्।। प्रतिमापूजनपक्षे पूजयित्वा ब्राह्मणाय दद्यात् ।।

---

प्रतिग्रहीताले 'स्वस्ति' भनेर कांचन पुरुषलाई छुनु ।।४२।।

*अब द्विज-दम्पती पूजनमा* - आचमन गरेर पूजाको संकल्प गरी मूल अनुसार धूप दीप नैवेद्य पूगीफल सिन्दूर भूषण वस्त्र आदि द्विज दम्पतिलाई दिनु र नमस्कार गर्नु ।

एतच्च द्विजदम्पतिपूजनं प्रधानत्वाद् वृषोत्सर्गकरणेऽपि कर्तव्यः शय्यादानवदिति शय्यादानादिकमन्वारोहणेऽपि कर्त्तव्यम् ।। तत्रामुकगोत्रायाऽमुकप्रेताय इति वाक्यं कुर्यात् ।।४३।।

अथ वृषोत्सर्गविधिः।। पतिपुत्रवती नारी भर्तुरग्रे मृता यदि।। वृषोत्सर्गं न कुर्वीत गां च दद्यात् पयस्विनीमिति वचनात् ।। वृषोत्सर्गं च कुर्वीतेति वचनादेकादशाहे मुख्यकाले मातृस्थापनपूजाभ्युदयिकश्राद्धरहित वृषोत्सर्गः कर्तव्यः।।

अथ वृषोत्सर्गप्रयोगः।। आचान्तः पूर्वाभिमुख उपविश्य। सव्येन।।

---

प्रतिमा पूजन गरी ब्राह्मणालाई दिनु । अनि द्विज दम्पतीलाई एक क्षण शय्यामा बसाल्नु ।।४३।।

*अथ वृषोत्सर्गप्रयोगः* - पति-पुत्रवती नारी० मूल अनुसार पढेर वृषोत्सर्ग गर्ने निर्णय गर्नुपर्दछ। यसमा मातृका पूजने र आभ्युदयिक श्राद्ध वर्जित छ। त्यसपछि

कुशतिलजलान्यादाय अद्य शौचान्तद्वितीयेऽह्नि अमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिस्वर्गलोकगमनार्थं वत्सतरीसहितवृषोत्सर्गमहं करिष्ये इति संकल्पं कुर्यात् ।। तत उत्तराभिमुखं ब्राह्मणमुपवेशयेत् ।। अद्यामुकगोत्रस्याऽमुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलपूगीफलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्राह्मणं वृणुयात् ।। वृतोऽस्मीति प्रतिवचनम् ।। यथविहितं कर्म कुरु इति यजमानेनोक्ते करवाणीति प्रतिवचनम् ।।४४।।

कर्ताले पूर्वतिर फर्की सव्य भएर आचमन गरी प्रतिज्ञा संकल्प गर्दा - अद्याशौच० देखि अहं करिष्ये' सम्म भन्नु । अनि उत्तर तिर फर्केका ब्राह्मणलाई चामल माथि स्थापना गरेर फेरि संकल्प गर्दा 'अद्यामुक० देखि त्वामहं वृणे' सम्म पढ्नु र पुरोहितले 'वृतास्म' भन्नु । अनि फेरि अर्को संकल्पमा गोत्राणाममुकदेखि० त्वामहं वृणेसम्म पढ्नु र पुरोहितले वृतोऽस्मि भन्नू ।।४४।।

ततः ।। अद्यामुकगोत्रस्यामुकप्रेतस्य कर्तव्यवृषोत्सर्गाङ्गभूतहोमकर्मकर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलपूगीफलवासोभिर्होतृत्वेन त्वामहं वृणे । इति होतृब्राह्मणं वृणुयात् ।। वृतोऽस्मीति प्रतिवचनम् ।। यथाविहितं कर्म कुरुत यजमानेनोक्ते करवाणीति प्रतिवचनम् ततो होता आचान्तः प्राङ्मुखोपविष्टो गोमयेनोपलिप्ते प्रागुदकप्रवणे देशे कुशैर्हस्तमात्रां चतुरस्रभूमिं परिसमूह्य कुशानैशान्यां क्षिप्त्वा गोमयोदकेनोपलिप्य मध्ये प्रादेशमात्रमुत्तरोत्तरक्रमेण दक्षिणहस्ताऽनामिकाङ्गुष्ठाभ्यां संगताभ्यामुद्धृत्य ऐशान्यां क्षिप्त्वा तं देशं जलेनाभ्युक्ष्य तत्र दक्षिणहस्तस्थकांस्यपात्रेण अग्निं स्थापयेत् ।। अग्नेर्दक्षिणतः परिस्तरणभूमिमति-

---

अनि संकल्प गर्दा अद्यामुकगोत्र० देखि त्वामहं वृणे सम्म भन्नू, होताले वृतोऽस्मि भनेर उत्तर दिनू । अनि होताले आचमन गरेर पूर्वतिर फर्की गोबरले लिपेको भूमिमा यज्ञ मण्डप बनाई कुशले बढार्नु र त्यो कुश ईशानतिर फालिदिनु । अनि त्यही

क्रम्य शुद्धमासनमुपकल्प्य तत्र प्रागग्रकुशैः स्तरणं विधाय ब्राह्मणमग्नेर्वाय-व्यात्प्रदक्षिणमानीय कल्पितासने बहिर्हस्तमुपवेशयेत् ।। ततोऽग्नेरुत्तरतः स्तरणभूमिमतिक्रम्य कुशत्रयमास्तीर्य्य तत्र मृत्पात्रवद्धसेतुं धृत्वा उदकक्षीरं च ब्रह्मणो मुखमवलोक्य निदध्यात् ।। तत उपमूलसकृल्लूनबर्हिषां मुष्टिचतुर्भागेन आग्नेयादीशानान्तं प्राच्यां, ब्रह्मणोऽग्निपर्यन्तं दक्षिणस्यां, नैर्ऋत्याद्वायव्यान्तं पश्चिमस्यां, अग्नितः प्रणीतापर्यन्तमुत्तरस्यां स्तरणं कुर्यात् ।। उत्तरतः प्रणीता पश्चिमे प्राक्संस्थमुदक्संस्थं वा उपयोक्ष्यमा-णानामासादनम् ।।४५।।

मण्डपबाट बूढी र साहिंली औंलाले तीन पल्ट वेदीको माटो मास्तिर उफार्दिनू । पवित्र जलले वेदीमा सेचन गर्नु । अनि कांसको पात्रमा ल्याएको अग्नि स्थापित गर्नु । अनि लामा लामा कुशहरू मण्डपको चारैतिर बिछाउनू । मन्त्र सबै मूलमा छ ।।४५।।

तद्यथा पवित्रच्छेदनार्थं कुशपत्रत्रयम् ।। पवित्रार्थमन्तर्गर्भिणं साग्रं कुशपत्रद्वयं प्रोक्ष्यण्यर्थे मृत्पात्रम् आज्यार्थं ताम्रस्थाली पायसं चर्वर्थं मृत्तिकास्थाली स्रुवसम्मार्जनार्थं कुशपत्रत्रयम् उपग्रहार्थं वेणीरूपकुशत्रयं प्रादेशमितं पलाससमित्त्रयं स्रुवः आज्यं तण्डुलाः दुग्धं एवमासाद्य तदुत्तरतः सिद्धमेव पिष्टमं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुग्मं सूवर्णकांस्यान्युपकल्पयेत् ।। ततः आसादितकुशपत्रद्वयमादाय पवित्रच्छेदनकुशैः प्रादेशमात्रं समादाय क्षिप्त्वा तानपास्य पवित्रेण प्रणीतोदकं च प्रोक्षिण्यां निधाय उदगग्रपवित्रव्यस्तहस्तयोरङ्गुष्ठाऽनामिकाभ्यामन्तरमादाय तन्मध्येन प्रोक्षण्युदकं त्रिः क्षिप्त्वा पवित्रे प्रोक्षण्यां

४६. अनि उत्तरतिर प्रणीता प्रोक्षणी स्थापित गरी ब्रह्मातिर हेरेर राखिदिनु । पवित्र छेदनका लागि कुश राखेर-तामाको घिउको पात्र, पायस र चरूको पात्र, सुरो र मार्जन गर्ने कुश, पलाशको समिधा, चामल, दूध राख्ने र ब्रह्माको लागि पूर्णपात्र, होताको

निधाय तत्पात्रं दक्षिणहस्तेनादाय वामे निधाय दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां तज्जलं किंचिदूर्ध्वं प्रक्षिप्य प्रणीताजलेन प्रोक्षणीरभिषिच्य तज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत् प्रोक्ष्य पवित्रशेषजलसहितं पात्रं प्रणीताग्न्योरन्तरे निधाय आज्यस्थाल्यामाज्यं निरूप्य चरुस्थाल्यां प्रोक्षण्युदकं प्रक्षिप्य एकत्र प्रदेशे रुद्रहोमार्थं दुग्धं निक्षिप्य प्रणीतोदकेन त्रिः प्रक्षालिततण्डुलान् चरुस्थाल्यां निक्षिपेत् ।। स्वयं चरुं ब्रह्मणा चाज्यं गृहीत्वा प्रदक्षिणीकृत्य अग्निपूर्वेण नीत्वा दक्षिणतः आज्यम् उत्तरतः पायसचरुं श्रपणार्थं युगपदग्नौ निधाय ।।४६।।

निम्ति वस्त्र तथा दक्षिणा आदि सबै सामग्री जम्मा पारी, पवित्र बनाई एउटा प्रोक्षणी पात्रमा राखी त्यही पवित्रले तीन पल्ट जल मास्तिर उफारि दिनू । त्यही जल सबै सामग्रीमा पनि छरिदिनू । अनि प्रोक्षणी पात्र उत्तरतिर राखी-घिउको पात्रमा घिउ र चरुको पात्रमा चरु राख्नू ।।४६।।

ज्वलत् तृणमादायाऽऽज्यचर्वोरुपरि प्रदक्षिणं भ्रामयित्वा अग्नौ क्षिपेत्। स्रुवस्य प्रागग्रस्यावाङ्मुखस्याग्नौ प्रतपनम् ।। सम्मार्ज्जनकुशैः सम्मार्ज्जनम्। प्रणीताजलेन स्रुवः प्रोक्षणं पुनः प्रतपनम् ।। आस्तृतबर्हिषि स्वपुरतः प्रागग्रस्थापनं विधाय।। पाके वृत्ते स्वयमाज्यमुद्वास्याग्निं पश्चिमेन नीत्वाऽऽज्योत्तरतो निदध्यात् ।। प्रोक्षणीवदुत्पवनम् ।। पवित्रे प्रोक्षण्यां निधाय ।। आज्यम् अवेक्ष्य ।। सत्यपद्रव्ये तन्निरस्य ।। पुनः प्रोक्षण्युत्पवनं विधाय ।। पायसचरोरुत्तरतः पूर्वसिद्धपिष्टचरुं निधाय।। होमसमाप्तिपर्यन्तमुपग्रहार्थं कुशैर्वामहस्ते उपग्रहं विधाय ।। प्रजापतिं चिन्तयन्नुत्तिष्ठन्प्रागग्रघृताक्तसमित्त्रयं प्रक्षिप्योपविश्य। पवित्रे गृहीत्वा। प्रोक्षणीजलेनाग्निं पर्युक्ष्य ।। पवित्रे प्रणीतासु निधाय ।। प्रोक्षणीपात्रं स्वस्थाने निदध्यात् ।। अथ प्रदक्षिणं जान्वाच्य जुहोति स्थाने उपतिष्ठन्

अनि तीन टुक्रा समिधा घिउमा चोभेर आगोमा हालिदिनु । अनि सुरो मूलमा बताए

प्राङ्मुखाऽन्वारब्धः स्रुवेण षडाज्याहुतीर्जुहुयात् ।।

नकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।। अन्येषां चावकृष्टानां कार्य्यमाचमनादिनेति परिशिष्टवचनात् ।।

ॐ काररहिता षडाज्याहुतीर्दद्यात् ।। तद्यथा ।। ब्रह्मणाऽन्वारब्धः स्रुवं गृहीत्वा ।। दक्षिणजानु नमयित्वा ।। संस्रवं विनैवाऽऽज्येन षडाहुतीर्जुहुयात् ।। स्वाहान्ते होमः- इदमग्नये० इति त्यागः।। इह रतिः स्वाहा ।। इदमग्नये० इह मध्व स्वाहा। इदमग्नये । इह धृतिः स्वाहा। इदमग्नये ।। इह स्वधृतिः स्वाहा।। इदमग्नये।। उपसृजं धरुणं मात्रे धरुणो मातरन्धयन् स्वाहा ।। इदमग्नये०।। रायस्पोषमस्मासुदीधरत् स्वाहा।। इदमग्नये० ततो ब्रह्मणान्वारब्धो जुहोति।। अग्नेर्दक्षिणभागे मनसा ।। ॐ मनवे प्रजापतये स्वाहा ।।

अनुसार आगोमा तताई दिनू । फेरि कुशले मार्जन गरी उत्तर तिर मुख पारेर राखिदिनु।

इदं प्रजापतये ।। अग्नेरुत्तरभागे ॐ इन्द्राय स्वाहा इदमिन्द्राय।। तत उत्तरार्द्धे ।। ॐ अग्नये स्वाहा।। इदमग्नये ।। दक्षिणपूर्वार्द्धे ।। ॐ सोमाय स्वाहा ।। इदं सोमाय ।। इत्याघारावाज्यभागौ संस्रवं हुत्वा समिद्धतमेऽग्नौ संस्रवं विनैव पायसेन नवाहुतयो दातव्याः ।। तद्यथा ।। ॐ अग्नये स्वाहा।। इदमग्नये ।। ॐ रुद्राय स्वाहा।। इदं रुद्राय ।। ॐ सर्वाय स्वाहा ।। इदं सर्वाय । ॐ पशुपतये स्वाहा । इदं पशुपतये । ॐ उग्राय स्वाहा ।। इदमुग्राय ।। ॐ असनये स्वाहा ।। इदमसनये ।। ॐ भवाय स्वाहा ।। इदं भवाय ।। ॐ महादेवाय स्वाहा । इदं महादेवाय ।। ॐ ईशानाय स्वाहा। इदमीशानाय ।। इति हुत्वा पिष्टकेन जुहुयात् । ॐ पूषा गां अन्वेतु नः पूषा रक्षतु सर्वतः ।। पूषा वाजसनोतु नः स्वाहा इदं पूष्णे० ।। ततः पायसपिष्टिकाभ्यां

घिउ र चरुमा एकेक पवित्र राखिदिनु र घिउ चरुमा केही परेको छ कि भनेर हेर्नु । अनि

ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते ।। ततः आज्येनाऽग्नेर्मध्यभागे ॐ भुः स्वाहा । इदमग्नये ।। ॐ भुवः स्वाहा । इदं वायवे ।। ॐ स्वः स्वाहा । इदं सूर्याय ।। ॐ त्वन्नोऽग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः।। यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाᳬसि प्रमुमुग्ध्यस्मत् स्वाहा । इदमग्निवरुणाभ्यां० ।। सत्वन्नोऽअग्ने वमो भवोतीने दिष्टो अस्याऽउषप्तोव्युष्टौ । अवयक्ष्वणो वरुणंᳬरराणोबीहि मृडीक ६ सुहवो न ऽएधि स्वाहा ।। इदमग्निवरुणाभ्यां० ।। अयाश्चाग्नेस्यनभिशस्ति पाश्च सत्वमित्व मयाऽअसि ।। अयानो यज्ञं वहास्ययानो धेहि भेषजᳬ स्वाहा। इदमग्नये० ।। ॐ ये ते शतं वरुणं ये सहस्त्रं यज्ञियाः पाशा वितता महान्तः ।। तेभिर्नो अद्य सवितो तव्विष्णुविश्वे मुञ्चन्तु मरुतः स्वर्काः स्वर्काय

प्रजापतिलाई सम्झेर तीन टुक्रा समिधा फेरि आगोमा हालिदिनु । अनि ॐ को

स्वाहा ।। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यः।। ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय ।। अथा वयमादित्यव्रते तवानागशो अदितये श्याम स्वाहा। इदं वरुणाय० ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम इति मनसा। एवं हुत्वा संस्रवप्राशनम् ।। आचमनं च कृत्वा पवित्राभ्यां शिरः सम्मार्ज्जनम् ।। सुमित्रि यानऽआपओषधयः सन्तु इति मन्त्रेण ।। ततो दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति मंत्रेणेशान्यां प्रणीताविमोकः।। ततः फलपुष्पान्वितेन घृतेन ।। मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृतऽ-आजातमग्निम् ।। कवि ꣳ शम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः स्वाहा । इदमग्नये ।। इति यजमानसहितो होता पूर्णाहुतिं कुर्यात् ।। ततस्तरणक्रमेण बर्हिरुत्थाप्याऽऽज्येनाभिघार्य ।। ॐ देवा गातु विदोगातुं

उच्चारण नगरीकन केवल घिउ मात्र छ आहुति दिनुपर्दछ । अनि दाहिने घुँडा मोढेर मूल

वित्वागातुमित ।। मनसस्पत इमं देवयज्ञꣳस्वाहा वातेधाः। स्वाहा । इदमग्नये ।। इति बर्हिर्होमं कुर्यात् ।। ततो यजमानः कुशतिलजलान्यादाय।। अद्यकर्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति ब्राह्मणाय दक्षिणां दद्यात् ।। स्वस्तीति प्रतिवचनम् ।। ततो वस्त्रयुगसुवर्णकांस्यान्युपनीय कुशादीन्यादाय अद्य कर्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमकर्मप्रतिष्ठार्थमेतानि वस्त्रयुगसुवर्णकांस्यानि बृहस्पतिवह्निचन्द्रदैवतान्यमुकगोत्रायामुकशर्मणे ब्राह्मणाय होतृदक्षिणां तुभ्यमहं संप्रददे इति होत्रे दक्षिणां दद्यात् ।। स्वस्तीति प्रतिवचनम् ।।४७।।

ततो द्विहायनमेकहायनं वा जीववत्सायाः पयस्विन्याः पुत्रं

---

अनुसार सबै होम गर्नु । अनि पूर्णपात्र र दक्षिणा संकल्प गरेर ब्राह्मण लाई दिनू ।।४७।।

अनि वाछो र बाछी ल्याउनु । ती कस्तो हुनुपर्दछ मूलमा हेर्दा 'लोहितो० देखि वृष

नीलादिवर्णम्। लोहिता यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।। श्वेतः खुरविशाणाभ्यां स नीलोवृष उच्यते ।। इति लक्षणलक्षितं यथालाभं वा आनीय ततश्चतस्त्रः द्वे एकां वा एकवर्षाधिकां वत्सतरीमानीय अग्निसमीपे सुशिक्षितगोपालेनाऽग्रीयं वृषभं संवेशयेत् ।। ततो रुद्राध्यायं पठन् वृषसमीपं गत्वा । मानस्तोके तनये मानऽआयुषीति मंत्रेणाग्रिमपाद-दक्षिणपार्श्वे कुंकुमलाक्षारसचंदनादिना त्रिशूलं लिखेत् ।। वृषो ह्यसि भानुनाद्युमन्तस्त्वा हवामहे।। एवमानः स्पृशमिति मन्त्रेण पश्चिमपादवामपार्श्वे चक्रं लिखेत् वृषभस्य।। तथा छन्दोपरिशिष्टे ।। ततोऽनेनैव गन्धेन मानस्तोके इतीरयन् ।। वृषभस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समालिखेत्। वृषोह्यसीति सव्यं चक्राङ्कमपि दर्शयेत् ।। तप्तेन पश्चादयसा स्पष्टे ते

उच्यते' सम्म हेरे थाहा पाईन्छ । रुद्री पाठगर्दै बाछोको नगीचै गई 'ॐ मानस्तोके० यो मन्त्र पढेर बाछोको अघिल्लो पाउको दक्षिण पातामा चन्दनले त्रिशूल अंकित गरोस् ।

च कारयेदिति ।। अयसा लोहेन ।। ततो लोहकारमाहूय वृषभमङ्कयेति ब्रूयात् ।। ततोऽग्निसंतप्तलोहेन त्रिशूलं चक्रं च स्पष्टं कारियत्वा तमुत्थाप्य वत्सतरीसहितं वृषभं वक्ष्यमाणमन्त्रैः स्नापयेत् ।। तत्र मंत्राः।। हिरण्यवर्णाः शुचयः पावकाया सुजातः कश्यपोयास्त्विन्द्रः।। याऽअग्निं गर्भं दधिरे सुवर्णास्ता नऽआपः शं स्योना सुहवा भवन्तु ।। यासां राजा वरूणो याति मध्ये सत्यानृते अवयश्यं जनानाम् ।। या अग्निं गर्भं दधिरे सुवर्णास्तान आपः शं स्योनासुहवा भवन्तु ।। यासां देवा दिविकृण्वन्ति भक्ष्यं या अन्तरिक्षे बहूधा भवन्ति ।। या अग्निं गर्भं दधिरेस्तान आपःशंस्योना सुहवा भवन्तु।। शिवेन मा चक्षुषा पश्यतायः शिवाय तन्नोपस्पृतत्वचम्मे ।। घृतश्च्युतः शुचयो याः पावकास्तानऽ

ॐ वृषोह्यसी० यो मन्त्र पढेर बायाँ पातामा चन्दनले चक्रको चिन्ह बनाइदेओस् । अनि लौहकार (कामी) लाई डाकेर आगोमा तताएको फलामले चन्दनले बनाएकै

आपः शं० ।। शन्नो देवीरभिष्टयऽआपो भवन्तुपीतये ।। शंयोरभिस्त्रवंतु नः इति ।। ततो लोहघण्टिकानूपुरकनकपट्टिकाश्वेतवस्त्रादिभिर्वत्सतरीसहितं वृषभमलङ्कृत्य ।। सावित्रीमघमर्षणं रुद्रान्पुरुषसूक्तं। यद्देवा-देवहेडनमित्यादि ऋक्त्रयं कृष्माण्डीश्च जपेत् ।। ततो वृषभस्य दक्षिणकर्णे पिता वत्सानां पतिरघ्न्यानामथो पितामह स्तां गर्गराणाम् ।। वत्सो जरायुः प्रतिधूक् पियूषमामिक्षा घृतं तद्वस्य रेतः ।। वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ।। वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः । इति मन्त्रद्वयं पठित्वा वत्सतरीसहितं वृषं पूजयेत् ।। एषोऽर्घो वत्सतरीसहितवृषभाय नमः। इदमनुलेपनं वत्सतरीसहितवृषभाय नमः।। एतानि पुष्पाणि वत्सतरीसहितवृषभाय नमः।। एतानि धूपदीपनैवेद्यानि वत्सतरी-

स्थानमा चक्र र त्रिशूल बनाउन लगाउनु । अनि बाछी र बाछोलाई स्नान गराई मूल अनुसार मन्त्र पढेर पूजा गरिदिनु । अनि बाछोलाई फलामे घण्टी बाँधिदिनु । बाछीलाई

सहितवृषभाय नमः।। ततः कुशतिलजलान्यादाय सव्येन । अद्याशौ-
चान्तद्वितीयेऽ ह्निअमुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्तिपूर्वकाक्षयस्वर्ग-
प्राप्तिकामो रुद्रदैवतमेनं युवानं पतिं वोददानि।। तेन क्रीडन्तीश्च रथप्रियेण-
मानः साप्तजनुषा सुभगारायस्पोयेण समिषामदेम ।। इत्युत्सृजेत् ।
नीलवृषे नीलपदप्रक्षेपः। एतयैवोत्सृजेरन्निति पारस्करवचनात् । अनयैव
ऋचोत्सर्गः ।। ततः ऐशानीं दिशं वत्सतरीसहितं वृषभं चालयेत् ।।
वत्सरोमध्यगतं वृषभंमभिमन्त्रयेत् ।। तत्र मंत्राः ।। मया भूरभिमावाहि
स्वाहा मारुतो सितमरुतां गणः। शंभूर्मयो भूरभिमावाहि स्वाहा वस्यूरसि
दुवस्वाच्छंभूरभिमावाहि स्वाहा ।। यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति
रश्मिभिः।। ताभिर्न्नोऽअद्य सर्वाभिरुचे जनायनस्कृधि ।। यावौ देवाः

सुनको सींग चाँदीको खुर, तामाको पिठिउँ आदि चढाए। मन्त्र पढ्दै दुबैलाई ईशान तिर
धपाइदिनू । अनि मूल अनुसार सबै मन्त्र पढिदिनू।।४८।।

सूर्य्ये रुचो गोष्वपश्वेषुजारुजाः।। इन्द्राग्नी ताभिः सर्व्वाभिरुचन्नो धत्त वृहस्पते ।। रुचन्नोधेहि ब्राह्मणेषु रुच ६ राजसु नस्कृधि । रुचं विश्वेषु शूद्रेष्वपिधेहि रुचारुचम् ।। तत्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानो हविर्भिः।। अहेडमानो वरुणेहवोध्युरुश ६ समानऽआयुः प्रमोषीः।। स्वर्णघर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहा इति ।।४८।।

ततः कृतापसव्यो दक्षिणाभिमुखो वामजानु पातयित्वा वृषभपुच्छसहिततिलकुशान्यादाय ताम्रपात्रस्थजलेन मन्त्रस्थफलमुद्दिश्याञ्जलित्रयेण तर्पयदेभिर्मन्त्रैः ।। स्वधा पितृभ्योमातृभ्यो बन्धुभ्यश्चापि तृप्तये ।।१।। मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः।। गुरुश्वशुरबन्धूनां ये कुलेषु

अनि दक्षिण फर्की अपसव्य भएर बायाँ घुँडा मोडेर बाछोको पुच्छर समातेर

समुद्भवाः ।।१।। ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ।। वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमामिति ।। ततो लोहकारमाहूय अभिमतं वेतनं तस्मै दद्यात् ।। उत्सृष्टं ब्राह्मणान्श्रावयेत् ।। यत्किञ्चिद्द्विजजनायोत्सृष्टं तदन्येन न नेतव्यं न वाह्यं तत्क्षीरं न पातव्यं केनचित् क्वचिदिति।। ततो रुद्राग्रे बहुसर्पिष्कं पायसं ब्राह्मणान् भोजयेत् इति वृषोत्सर्गः।। विष्णुः ।। होत्रे वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च ।। अयस्काराय दातव्यं वेतनं मनसेप्सितम् ।। ब्रह्मपुराणे ।। न च बाह्यो न तत्क्षीरं पातव्यं केनचित्क्वचित् । अङ्कितं वृषमुत्सृष्टं यो वाहयति दुर्मतिः ।। कुलानि पातयेत्तस्य नरके नात्र संशयः ।। अत्र फलश्रुतिः।। तत्र विष्णुः– उत्सृष्टो वृषभो यस्मिन्पिबन्त्यथ जलाशये ।। जलाशयः

सम्म पढ्नू पर्दछ । अनि फलश्रुति पनि मूल अनुसार नै पढेर यजमानलाई सुनाउनु पर्दछ।। त्यसपछि सकेसम्म कपिला गाई नै, नसके द्रव्य भए पनि राखी पूजा गर्नु, मन्त्र

समकालं पितृंस्तस्य प्रतिष्ठति ।। शृंगाग्रेणोल्लिखेद् भूमिर्यत्र क्वचन-
दर्पितः। पितृणामन्नपानं तत्प्रभूतमुपतिष्ठति । वृषोत्सर्गं पितृणामात्मनोऽपि
च ।। छान्दोगपरिशिष्टे ।। यमलोके मया दृष्टा भवतौ यमकिङ्करैः।।
पात्यमानास्त एवाद्य कथं स्वर्लोकमागताः ।। प्रेतं विमुच्यतां तात
उत्सृष्टो वृषभो भुवि ।। सुचिना तेन पुत्रेण तारिता महतो भयात् ।।
सर्वेषां चैव यज्ञानां वृषोत्सर्गः समो मतः।। स्पर्द्धते योऽश्वमेधेन
क्रतुकोटिसमो यतः। आदित्यपुराणे ।। यावन्ति रोमकूपानि वृषभस्य
भवंति हि । गवां चैव तु रोमाणि यावन्ति मुनिपुङ्गव ।। तावत्कोटिसहस्राणि
रुद्रलोके महीयते ।। यत्किंचित्कुरुते पापं पुरुषौ वृत्तिकर्षितः।। तत्सर्वं
शान्तिमायाति वृषोत्सर्गेण तत्क्षणात् ।। वृषभस्य तु शब्देन पितरः
सपितामहाः।। आवर्त्तमाना दृश्यन्ते स्वर्गलोके न संशयः ।। जले

मूलमा हेर्नू। अनि तिल कुश लिएर संकल्प मूल अनुसार पढ्दै गए हुन्छ। अनि प्रार्थनामा

प्रक्षिप्य लांगूलं तोयं चोद्धरते वृषः ।। दशवर्षसहस्राणि पितरस्तेन तर्पिता।। गवां मध्ये यदा चैव वृषभः क्रीडते तु यत् ।। अप्सरौघसहस्रेण क्रीडति पितरः ततः।। कूले समुद्धृतायां च श्रृंगे तिष्ठति मृत्तिका ।। भक्षभोज्यमया शैलाः पितरस्तेन तर्पिता ।। लाङ्गूलं यावदुद्यम्य तोये प्रक्रीडते तु सः।। अप्सरौघसहस्रैस्तु हृष्यंति पितरः सदा ।। सहस्रहलमात्रेण कनकेन यथाविधि ।। तृप्तिस्तु यावान् पितॄणां सो वै वृषसमोच्यते ।। एवं स्त्रियाऽअपि ।। तत्र अद्य अमुकगोत्राया अमुकप्रेतायाः ।। इति विशेषः ।।

अथ कपिलादानम् ।। कपिलासमीपं गत्वा । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः।। इति मन्त्रेण कपिलां पुष्पचन्दनधूपदीपनैवेद्यादिभिः सम्पूज्य ।। कुशजलेन

- कपिले० । अनि दान प्रतिष्ठा र भूयसि पनि संकल्प गरेर दिनुपर्दछ। अनि गाईको

गामभ्युक्ष्य।। कुशादीन्यादाय अद्याशौचान्तद्वितीयेऽह्नि अमुकगोत्रस्यामुक-प्रेतस्य स्वर्गप्राप्तिकाम इमां कपिलां गां सवत्सां हेमश्रृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं वस्त्रयुगच्छन्नां मुक्तालांगूलभूषितां रुद्रदैवताममुकगोत्रायाऽ-मुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।। इत्युक्त्वा दद्यात् ।। स्वस्तीति प्रतिवचनम् ।। प्रार्थना।। कपिले सर्वदेवानां पूजनीयासि रोहणी ।। तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे । ततो दानप्रतिष्ठाद्रव्यादिक-मादाय।। अद्यकृतैतत् सोपस्करणसवत्सकपिलागोदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।। इति दानप्रतिष्ठा ।। दक्षिणां च दद्यात् ।। ततः प्रतिग्रहीता।। कोदात् कस्माऽअदात् कामोदात् कामायाऽदात् ।। कामो दाता कामः प्रतिग्र-

---

पुच्छरले आफ्नू शिरमा अभिमोक गर्नू । अनि सचैल स्नान गर्नुपर्दछ । अनि अनेक

हीता कामैतत्ते, इति कामस्तुतिं पठेत्।। गोपुच्छग्रहणं कृत्वा ।। यथोक्त-कपिलाभावे केवलां गामपि दद्यात् । ततः सचैलं स्नायात् ।।४९।।

अथैकादशाहे आद्यमासिकश्राद्धप्रयोगः।। कर्ता सुचिराचान्तः शुक्ल-द्विवासाः गोमयेनोपलिप्तायां भूमौ दर्भेषु तिष्ठन् भूम्यै नमः इति त्रिः भूमिं सम्पूज्य ।।यजमानसवर्णेनाहुतमाचान्तं ब्राह्मणं स्वागतमिति पृच्छेत्।। सुस्वागतमिति तेनोक्ते उभावुपविशतः।। ततः श्राद्धकर्ताऽपसव्येन पुष्पचंदन-पूगीफलानि ब्राह्मणाय दत्वा ब्राह्मणदक्षिणजानुं स्पृष्ट्वा अद्यामुकगोत्रस्याऽमुकप्रेतस्याद्यमासिकश्राद्धकरणाय भवन्तं ब्राह्मण-

---

शास्त्र-पुराणका वचन मूलमा हेर्नु।।४९।।

५०. अब एकादशाहकै दिन आद्य मासिक गर्नु पर्दछ - कर्ता शुद्ध भएर स्वच्छ वस्त्र पहिरी आचमन गरेर ॐ भूम्यै नमः' भनेर गाईको गोबरले लिपेको स्थानमा बसेर

महमामन्त्रये ।। आमंत्रितोऽस्मीति प्रतिवचनम् ।। अक्रोधनैः शौचपरैः सततं ब्रह्मवादिभिः।। भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा । सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।। भवितव्यं भवद्भिर्नोऽद्यतने श्राद्धकर्मणि ।। इति पात्रब्राह्मणं नियमान् श्रावयेत् । भवितव्यमिति तेनोक्ते ।। अर्घपात्रं वामहस्ते कृत्वा गन्धपुष्पादिनाऽभ्यर्च्य कुशं गृहीत्वा अद्यामुकगोत्राऽमुक- प्रेताद्यमासिकश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति पादार्घं दद्यात् ।। ततस्तिलतैलेन विप्रपादौ आजानु

कर्ताले विप्रलाई स्वागतम् भनेर सोधेपछि बाहुनले सुस्वागतम् भन्नु । अनि कर्ता अपसव्य भएर कुश तिल लिई विप्रको दक्षिण घुँडा छोएर संकल्प- अद्यामुक गोत्रस्य० देखि आमन्त्रये' सम्म पढ्नू अनि 'आमन्त्रितोऽस्मि' भन्ने विप्रले उत्तर दिन्छन् । अनि 'अक्रोधनैः० देखि 'भवितव्यम्' पुरोहितले पढिदिनु । अनि जल चन्दन् तिल, कुश हाली हुना उचाली संकल्प गर्दा अद्यामक० देखि तवोपतिष्ठताम् सम्म पढेर दुना

अभ्यङ्गयेत् ।।५०।।

ततः सव्येनाचम्य पात्रब्राह्मणमग्रे कृत्वा श्राद्धदेशमागत्योपविश्यान्नाभिप्रायेण सिद्धमिति पृच्छेत् । ततो दक्षिणाग्रे कुशसहितनेपालकम्बलाद्यात्मकमासनमुपकल्प्याऽसनं संस्पृशन् ।। अत्र देवराजाभ्यनुज्ञातो विश्रम्यतां द्विजवर्यानुग्रहात् ।। प्रासादये त्वा समगृह्ण तज्ज्ञानापूग्निपूतेन करेण विप्रः, इति मन्त्रं पठित्वा पात्रब्राह्मणं दक्षिणहस्ते धृत्वोदङ्मुखमुपवेशयेत्।

---

राखिदिनु अनि तिलको तेल ब्राह्मणलाई लगाइदिनू ।।५०।।

अनि सव्य भएर आचमन गरी नेपाल कम्बलको पूजा गरेर मूल अनुसार संकल्प पढी ब्राह्मणलाई दान दिनु र दान प्रतिष्ठा पनि गरिदिनू । अनि कुशका बाहुनको देब्रेतिर दीयो बालेर त्यसको पूजा गरिदिनू । अनि तिल र सरस्यूँ चारैतिर छरिदिनु । अनि कर्ता सव्य भएर पूर्वतिर फर्की कर्मपात्रको तीन कुड्का कुश लिएर ॐ अपवित्रः पवित्रो वा०' तीन पल्ट पढेर पुण्डरीकाक्षः पुनातु भनेर सबै श्राद्ध सामग्री र आफूलाई पनि

ततः पात्रब्राह्मणेन कार्या।। रक्षोघ्नान्गौरसर्षपान् तिलांश्च श्राद्धदेशे विकिरेत् ।। ततः पात्रब्राह्मणस्य पादस्थले दक्षिणाऽग्रकुशत्रयं दद्यात्।। तद्रक्षा च पात्रब्राह्मणेन कार्या ।। रक्षोघ्नान्गौरसर्षपान् तिलांश्च श्राद्धदेशे विकिरेत् ।। ततः पूर्वाभिमुखः सव्यं कृत्वा कुशोदकेन अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।। इति पठित्वा पुण्डरीकाक्षः पुनात्विति पुण्डरीकाक्षं स्मृत्वा श्राद्धीयद्रव्याण्यात्मानं च सिंचेत् ।। तत कुशतिल-जलान्यादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्ति-

---

छर्कनु । त्यही कुशले संकल्प गर्नु । अद्य० देखि करिष्ये सम्म पढ्नू । त्यही भित्र अधिकमास पर्ने भए षोडशको स्थानमा सप्तदशः भन्नुपर्दछ ।।५१।।

फेरि संकल्प लिनु र अद्यामुक० देखि करिष्ये सम्म पढ्नू । ब्राह्मणले कुरूष्व भन्नु । अनि सव्य भएर ॐ देवताभ्यः० तीन पल्ट पढिदिनू र अपसव्य भएर दक्षिण

कामो यथा कालमाद्यादिषोडशश्राद्धाण्यहं करिष्ये - इति संकल्पः।। तस्मिन् वर्षे मरणादिनमारभ्य द्वादशमासेषु मध्ये अधिकमासे पतिते षोडशपदस्थाने सप्तदशपदं योज्यम् ।। पुनः कुशतिलजलान्यादाय ।। अद्यामुकगोत्रस्याऽमुकप्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतो षोडश श्राद्धान्तर्गताऽऽद्यमासिकश्राद्धमहं करिष्ये इति संकल्प्य ।। कुरुष्वेति ब्राह्मणप्रतिवचनम् ।। ततः सव्येन देवताभ्यः त्रिवारं पठेत् ।। ततोऽपसव्यं कृत्वा ।। दक्षिणाभिमुखः पातितवामजानुः कुशादिकमादाय ।। अद्यामुकगोत्रस्याऽमुकप्रेतस्याद्यमासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति कुशरूपमासनं दक्षिणाग्रमुत्सृजेत् ।।५२।।

अथ छत्रदानम् ।। ततः सव्यं कृत्वा प्राङ्मुखोपविष्ट छत्राय नमः।।

फर्की वायाँ घुँडा मोडेर संकल्प गर्दा- अद्यामुक० तवोपतिष्ठताम् सम्म पढी कुशरूप आसन ब्राह्मणमा राखिदिनु ।।५२।।

ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपूज्य छत्रमभिषिंच्य कुशादीन्यादाय। अद्यामुकगोत्रस्यामुकप्रेतस्य यमपथाधिकरणकघोराऽऽतपवारणार्थमिदं छत्रमुत्तानाङ्गिरो दैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे। इत्युक्त्वा विप्रहस्ते जलं दत्वा ।। स्वस्तीति प्रतिवचनम् । प्रार्थना।। सर्वेषामेव दानानां छत्रमातपवारणम् ।। सुखदं मोक्षदं यस्मात्तस्माच्छान्तिं प्रयच्छतु ।। ततः कुशतिलजलयुतदानप्रतिष्ठामादाय ।। अद्य कृततैतच्छ-त्रदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे ।। इति दक्षिणां दद्यात् ।। प्रतिग्रहीता

---

*अब छत्र दानमा*- सव्य भएर पूर्वतिर फर्केर ॐ छत्राय नमः र ब्राह्मणाय नमः भनेर पूजा गरी संकल्पमा ॐ अद्य० देखि सम्प्रददे सम्म भनेर कुश बाहुनको हातमा राखिदिनु । ब्राह्मणले स्वस्ति भन्नु, अनि कर्त्ताले प्रार्थना मूलमा हेरेर पढ्नू अनि दान प्रतिष्ठाको संकल्प र भूयसी दक्षिणाको पनि संकल्प पढ्नू । दान थाप्नेले स्वस्ति भन्नू

स्वस्तीत्युक्त्वा छत्रदण्डं धारयेत् ।।५३।।

अथ उपानहद्दानम् ।। उपानहद्भ्यां नमः।। ब्राह्मणाय नमः इति देयब्राह्मणौ त्रिः संपूज्य उपानहावभिषिच्य कुशादीन्यादाय ।। अद्यामुक-गोत्रस्यामुकप्रेतस्य संतप्तबालुकाऽसिकंटकितभूदुर्गसंतरणार्थमिमे उपानहावुत्तानांगिरोदैवते अमुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।। इति दद्यात् । स्वस्तीति प्रतिवचनम् ।। प्रार्थना ।। उपानहौ प्रदास्यामि कंटकादिनिवारणे ।। सर्वस्थानेषु सुखदे अतः शान्तिं प्रयच्छतः कुशादीनि दानप्रतिष्ठां दक्षिणां चादाय।। अद्य कृतैतदुपानहद्दानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।।

र छाता हातमा लिनू ।।५३।।

अब उपानह (जुत्ता) दानमा बाहुनलाई र जुत्तालाई पूजा गरिदिनू । अनि तिल कुशले संकल्प गर्दा अद्यामुक० देखि तुभ्यमहं सम्प्रददे सम्म पढ्नू, दान लिनेले स्वस्ति भन्नु

इति दानप्रतिष्ठां दक्षिणां च दद्यात् ।। प्रतिग्रहीता स्वस्तीत्युक्त्वा उपनहावारोहयेत् ।।५४।।

अथाश्वदानम् ।। देयब्राह्मणौ त्रिः संपूज्य देयमभिषिच्य कुशादीन्यादाय। अद्यामुकगोत्रस्यामुकप्रेतस्यातिविषमदुर्गसंतरणार्थममुकमश्वं यमदैवतं सपर्याणममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।। इति दद्यात् ।। प्रार्थना ।। विश्वस्त्वमश्वरूपेण यस्मादमृतसंभवः ।। चन्द्रार्कवाहनं नित्यमतः शान्तिं प्रयच्छ मे ।। ततः कुशादीनि दानप्रतिष्ठां दक्षिणां चादाय ।। अद्य कृतैतदश्वदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतम-मुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ।। इति दक्षिणां

---

अनि प्रार्थनाको मन्त्र र दानप्रतिष्ठा एवं भूयसी दक्षिणा पनि संकल्प गरेर दिनू।।५४।।

*अब अश्व दानमा* - घोडा र ब्राह्मणको पूजा गरेर - अद्यामुक० देखि तुभ्यमहं सम्प्रददे सम्म पढ्नू । अनि प्रार्थना र दान प्रतिष्ठा एवं भूयसी दक्षिणा पनि संकल्प गरेर

दद्यात् ।। ततः प्रतिग्रहीता स्वस्तीत्युक्त्वा अश्वस्य दक्षिणकर्णं स्पृशेत्।।५५।।

अथ शिविकादानम् ।। देयब्राह्मणौ त्रिः संपूज्य देयं चाभ्युक्ष्य कुशादीन्यादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्य उच्चावचविषमभूतरणार्थमिमां शिविकाम् उत्तानांगिरोदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।। इति दद्यात् ।। प्रार्थना ।। देवदेव जगन्नाथ विश्वात्मन् दत्तयाऽनया ।। प्रभो शिविकया देव प्रीतो भव जनार्दन ।। ततः कुशादीनि दानप्रतिष्ठां दक्षिणां चादाय ।। अद्यकृतैतच्छिविकादानप्रतिष्ठार्थं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।।

---

दिनू र दान लिनेले स्वस्ति भन्नू र घोड़ाको कान छुनु ।।५५।।

अब शिबिका (पालकी) दानमा ब्राह्मण र पालकीको पूजा गरेर संकल्प लिनु र अद्यामुक० देखि तुभ्यमहं सम्प्रददे सम्म मूलमा हेरेर पढ्नू । अनि प्रार्थना र दान प्रतिष्ठा

इति दक्षिणां दद्यात् ।। ततः प्रतिग्रहीता स्वस्तीत्युक्त्वा शिविकां स्पृशेत् ।। तथा च ब्रह्मपुराणे ।। उपविश्यासने भद्रे छत्रं तत्र प्रकल्पयेत् ।। आचार्य्याय च तच्छत्रं ब्राह्मणाय प्रकल्पयेत् ।। पश्चादुपानहौ दद्यात् सा चैव शिविकां तथा ।। बृहस्पतिः ।। वस्त्रालकारशय्यादि यत् पित्र्युद्वाहनादिकम् ।। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रेऽथ तर्पयेत्।।५६।।

ततः आचम्याऽपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः ।। अपहता असुरा रक्षाꣳसि वेदिषद इति श्राद्धदेशे वामावर्तेन तिलान् विकिरेत् ततो हस्तार्घपात्रोपरि पवित्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।। इति दक्षिणाग्रं पवित्रं धृत्वा ।।

एवं भूयसी पनि संकल्प गरेर दिनू ।। दान लिनेले स्वस्ति भन्नू ।।५६।।

अनि कर्ताले आचमन गरी अपसव्य भएर दक्षिण फर्की बायाँ घुँडा मोडेर -

शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये।। शंय्योरभिस्रवन्तु नः, इति जलं दत्वा ।। तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ।। प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणाहि नः स्वाहा, इति तिलान् क्षिप्त्वा।। श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।। इष्णन्निषाणामुम्मऽ इषाणसर्वलोकम्मऽ इषाणेति पुष्पं दत्वा । गंधद्वारेति गन्धं दद्यात् ।। हस्तार्घपात्रं संपन्नमिति पात्रब्राह्मणं स्पृष्ट्वा सुसंपन्नमिति तेनोक्ते हस्तार्घपात्रं वामहस्ते कृत्वा । नमो नारायणायेति पुष्पसहितं पवित्रं विप्रहस्ते उत्तराग्रं धृत्वा ।। या दिव्याऽआपः पयसा संब्रभुवुर्य्या-ऽअन्तरिक्षाऽउत पार्थिवीर्य्याः। हिरण्यवर्णा यज्ञियास्तानऽआपः-

अपहताऽअसुरा० पढी तिल छर्कनु । अनि हस्तार्घपात्रमा मूल अनुसार मन्त्र पढेर जल, चन्दन, अक्षता, फूल र पवित्र हालेर ब्राह्मणलाई हस्तार्घपात्रं सम्पन्नं भनेर सोध्नू, उनले सुसम्पन्नं भनेपछि फूल पवित्र बाहुनमा राखिदिनू अनि या दिव्या० पढेर दुना ढाक्नू अनि

शिवा:शस्योना: सुहवा भवन्तु, इत्यनेन हस्तार्घपात्रस्थं जलमभिमंत्र्य।। कुशमादाय ।। अद्यामुकगोत्रामुकप्रेताद्यमासिकश्राद्धे एष पादार्घस्ते मया दीयते तवोपतिष्ठतामिति विप्रकरे पवित्रोपरि अर्घजलं ददत्दुत्सृजेत् ।। पात्रब्राह्मणवामपार्श्वे प्रेताय स्थानमसीत्युत्तानमेव हस्तार्घपात्रं स्थापयेत्।। तदुपरि कुशान् दद्यात् ।। तच्च दक्षिणापर्यन्तं न चालयेत् ।।५७।।

ततः पात्रब्राह्मणं गंधपुष्पादिभिः संपूज्य ।। कुशादीन्यादाय ।। अद्यामुकगोत्रामुकप्रेताद्यमासिकश्राद्धे एतानि चन्दनपुष्पाक्षतधूपदीपयज्ञोपवीतवासांसि ते मया दीयन्ते तवोपतिष्ठतामित्युत्सृजेत्।। ततः सव्यं कृत्वा। प्रेतस्य भुक्तशय्यासनादीन् गंधपुष्पैरभ्यर्च्य श्राद्धभोक्त्रे प्रतिपादयेत् ।। ततः आचम्यापसव्यं कृत्वा । अर्चनविधेः सर्वं परिपूर्णमस्तु इत्युक्ते

कुश लिएर संकल्प गर्नू र अलिकति जल विप्रमा दिई ब्राह्मणको छेउमा प्रेताय स्थानमसि भनेर दुना राखि दिनू । त्यसमा तीन टुक्रा कुश पनि राखि दिनु त्यो दक्षिणा

अस्त्विति ब्राह्मणप्रतिवचनम् ।। ततो गौरमृत्तिकया नीवारचूर्णेन जलेन वा ब्राह्मणं वेष्टयित्वा चतुरस्रं मण्डलं कुर्य्यात् ।। परकीयभूमौ श्राद्धकरणे श्राद्धीयवस्तुषु किंचित्किंचिदुद्धृत्य तिलघृतजलयुतमन्नमादाय इदमेतद् भूस्वामिपितृभ्यो नमः इति दद्यात् ।। तत उष्णमन्नं ताम्रपात्रेण कराभ्यामादाय मनाक्स्थित्वा पुरुषतृप्तिक्षममन्नं परिविष्यात् ।। ततः इदं मधुरं इदमम्लमित्यादि व्यंजनगुणान् कीर्त्तयन् सर्वाणि व्यंजनानि भूमिस्थपात्रान्तरेषु परिविष्य घृतं सतिलजलं चोपनीय अन्नं मधुनाभिघारयेत् ततः पात्रालंभनाङ्गुष्ठावगाहनं विनैव, पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य

---

पर्यन्त नचलाउनू ।।५७।।

अनि ब्राह्मणको पूजा गरेर संकल्प मूल अनुसार अद्य देखि उत्सृजेत् सम्म पढिदिनु। अनि सव्य भएर प्रेतको भुक्तशय्यासनादीको पूजा गरेर ब्राह्मणलाई दिनु । अनि आचमन गरेर अपसव्य भई 'अर्चनविधेः सर्वं परिपूर्णमस्तु' भन्नु । र ब्राह्मणले 'अस्तु' भन्नु।

मुखे अमृते अमृतं जुहोमि स्वाहा ।। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।। समूढमस्य पाꣳसुरे स्वाहा ।। इति पठित्वा ।। अपहता असुरा रक्षाꣳसि वेदिषदः।। इत्यन्नोपरि तिलान् विकीर्य्य ।। अमृतरूपतया अन्नं विचिन्त्य कुशादीन्यादाय ।। अद्यामुकगोत्रायाऽमुकप्रेतायाऽऽद्य मासिकश्राद्धे इदमन्नं सोपकरणं मया दीयते तवोपतिष्ठतामित्युत्सृजेत्।। ततो भवान् प्राशयतु इत्यापोशनं दत्वा । यथामुखं जुषस्वेति ब्राह्मणं ब्रूयात् । ब्राह्मणश्च वामेन पाणिनान्नपात्रमत्यजन् भुञ्जीत संज्ञया च भक्षप्रार्थनां कुर्यात् ।। श्राद्धकर्ता, मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः।। माध्वीर्न्नः संत्वोषधीः ।। मधुनक्तमुतोषसो मधुमत् पार्थिवꣳरजः।।

अनि ब्राह्मणको अगाडि जलले चारपाटे मण्डल बनाउनू । अनि तिल घृत मधु जल युक्त एउटा सिधा राखेर एतद् भूस्वामी० भनेर जल छाडिदिनु। अनि अर्को सिधा वा पाक्य अन्न सामुन्ने राखेर पृथिवी ते०' देखि सुरे स्वाहा' सम्म पढ्नू अनि अपहता पढेर तिल

मधु द्यौरस्तु नः पिता।। मधुमान्नो वनस्पतिर्मधुमाँअस्तु सूर्य्यः।। माध्वीर्गावो भवन्तु नः।। मधु मधु मधु। अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्।। तत्सर्वमच्छिद्रमस्तु श्रीभास्करस्यप्रसादतः ।। नमस्तुभ्यं विरूपाक्ष नमस्तेऽ-नेकचक्षुषे ।। नमः पिनाकहस्ताय वज्रहस्ताय वै नमः।। इति पठेत् ।। वीणादिभिर्ब्राह्मणं हर्षयन् व्यंजनगुणान् कीर्त्तयन् तस्य यत्र यत्रेच्छोपलभ्यते तत्तदुपनयन् मन्दं मन्दं भोजयेत् ।। अत्र विकिरनिषेधः।। ततो ब्राह्मणं तृप्तं ज्ञात्वा तस्मै, जलं गण्डूषमिदं ते इति प्रत्यापोशनं दद्यात् ।।५८।।

अत्र स्वदितं प्रश्नाभावः ।। ततः पिण्डमहं करिष्ये इति पृच्छेत् ।।

छर्किदिनू । अनि तिल-कुश लिएर अद्यामुक० देखि तवोपतिष्ठताम् सम्म पढेर जल कुश छाडिदिनु । अनि भवान् प्राशयतु भनेर अपोशान दिनू । अनि मधुव्वाता० का तीन मन्त्र र तीन पल्ट मधु मधु मधु भन्नू । अनि अन्नहीनं० हस्ताय वै नमः सम्म पढ्नु। अनि भवान् प्राशयतु भनी कुशको ब्राह्मणमा जल दिनु । अनि राम्ररी भोजन गर्नु हवस् भनी प्रार्थना गर्नू र मधुव्वाता तीन मन्त्र र अन्नहीनं देखि वै नमः सम्म पढिदिनू अनि सबै

कुरुष्वेति ब्राह्मणोक्ते तदुच्छिष्टसमीपे चतुरस्रं हस्तैकप्रमाणं दक्षिणप्लवं चतुरङ्गुलोच्छितं पिण्डस्थानं निर्मिमीत ।। तत्र रेखा करणमुल्मुकभ्रमणं च न भवति ।। ततः छिन्नमूलकुशान् दक्षिणाग्रान् तत्रास्तीर्य्य । पवित्रपुटकादिकं तिलजलगंधपुष्पयुतं कृत्वा दक्षिणहस्तेन कुशादिकमादाय ।। अद्यामुकगोत्रामुकप्रेताद्यमासिकश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनं दद्यात् ।। ततः श्राद्धशेषमन्नं तिलघृतमधुयुतमेकीकृत्य तेन कपित्थप्रमाणं पिण्डं निर्माय दक्षिणहस्तेनादाय जलतिलकुशादिकं चादाय । अद्यामुकगोत्रामुकप्रेताद्यमासिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामित्यवनजनस्थाने

वस्तुको वर्णन गर्दै ब्राह्मणले बिस्तार बिस्तार भोजन गरून् । अनि ब्राह्मण अघाए भनेर जल दिनू।

५९. यहाँ प्रश्नोत्तर निषेध छ । अनि पिण्डदानमहं करिष्ये भनेर सोधेपछि विप्रले 'गर'

पिण्डं दद्यात् । आस्तृतकुशमूलेन करं प्रोक्ष्य सव्यंकृत्वाऽऽचम्य हरिं स्मृत्वा ।। अपसव्यं कृत्वा । मंत्रपाठो निषेधात्तूष्णीमेव भास्करमूर्तिं प्रेतं चिंतयेत् ।। अवनेजनावशिष्टजलयुतपात्रं वामहस्ते कृत्वा दक्षिणहस्तेन कुशादिकमादाय अद्यामुकगोत्रामुकप्रेताद्यमासिकश्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठतामिति प्रत्यवनेजनं दद्यात् ।।५९।।

ततो नीवीं विस्स्रंस्य ।। सव्यं कृत्वा ।। वामेन पाणिना धृतं सूत्रं

भन्ने उत्तर दिन्छन् अनि चारैतिर सम र एक हात प्रमाणको दक्षिणतिर भिरालो परेको वेदी बनाउनु । यहाँ रेखा र आगो घुमाउन वर्जित छ। वेदीमा कुश विछाउनु । अनि संकल्पमा 'अद्यामुक० देखि तवोपतिष्ठाम्' पढी अवनेजन दिनु । अनि तिल घृत मधु जल हालेर कपित्थ बराबरको पिण्ड तयार पारी जल तिल कुश लिएर संकल्प जर्दा- अद्यामुक० देखि तवोपतिष्ठताम् सम्म पढेर अवनेजन दिएकै स्थानमा पिण्ड राखि दिनू । वेदीमा बिछाएको कुशले हात पुछ्नू । अनि सव्य भएर आचमन गरी हरि स्मरण गर्नु । अनि

दक्षिणहस्तेन गृहीत्वा ।। प्रेतैतत्ते वासः इति पिण्डोपरि धृत्वा ।। गंधपुष्पादिभिः पिण्डं संपूज्य ।। कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेताद्य-मासिकश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामित्युत्सृजेत् ।। पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।। ततः आचान्तो ब्राह्मणस्य करे शिवा आपः संतु इति जलं ।। सौमनस्यमस्त्विति पुष्पम् ।। अक्षतं चारिष्टमस्त्विति तण्डुलान् दद्यात्।। सन्त्विति अस्त्विति च प्रतिवचनम् ।। ततः पुटकादिपात्रे शान्त्युदकं परिकल्प्य मेदिनी शिरसाऽभिवन्द्य इदं मंत्र पठेत् ।। नमो नमो मेदिनि

अपसव्य भएर मन्त्र पाठ नगरी सूर्यरूपी प्रेतको चिन्तन गरेर फूल अक्षता पिण्डमा चढाइदिनू। अनि अवनेजनको संकल्प लिएर अद्य० देखि तवोपतिष्ठाम् सम्म पढिदिनू ।।५९।।

अनि कम्मरमा छोइदिनू । सव्य भएर प्रेतैतत्ते वासः भनेर पिण्डमाथि सूत्र चढाउनू अनि पिण्ड-पूजा गरेर संकल्प लिनू - अद्य० देखि तवोपतिष्ठाताम् सम्म पढ्नू । अनि

लोकधात्रि ऊर्व्वि महीशैलधारिणि धरणि नमः। धरणि काश्यपि जगत्प्रतिष्ठे वसुधे नमोऽस्तु वैष्णवि लोकधात्रि ।। नमोऽस्तु ते सर्वरसप्रतिष्ठे निवापनावीचि नमो नमोऽस्तु ते ।। ततः कुशादीन्यादाय।। अद्यामुकगोत्रस्यामुकप्रेतस्याऽद्यमासिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं विप्रहस्ते दत्वा । उपतिष्ठतामिति प्रतिवचनं गृहीत्वा। सव्यं कृत्वा दक्षिणां दिशं पश्यन् ।। अघोरः प्रेतोऽस्तु इति पूर्वाग्रां जलधारां पिण्डोपरि दद्यात् ।। अत्राशीः प्रार्थना निषेधः ।। ततोऽपसव्यं कृत्वा । सपवित्रकुशत्रयं पिण्डोपरि दक्षिणाग्रं धृत्वा ।। नमो वाचयिष्ये

पिण्डशेष पिण्डको नगीचै राखिदिनू । अनि बाहुनलाई शिवा आपः सन्तु भनेर जल दिनु । अनि सौमनस्य० ले फूल र अक्षतं० ले तण्डुल दिनू । अनि अक्षय्योदकको लागि दुनामा जल लिएर नमो मेदिनी० नमोस्तु ते सम्म पढेर अनि संकल्प मा अद्य० देखि तवोपतिष्ठताम् सम्म पढ़ी पिण्डमा अक्षय्योदक दिनू । अनि सव्य भएर दक्षिणातिर

इति पृच्छेत् ।। वाच्यतामित्यनुज्ञातः ।। प्रेताय नमः इत्युच्यतामिति वदेत् ।। अस्तु नमः इत्युच्यमाने ।। पुटकादिस्थजलादिना मंत्रपाठं विना इदमूर्ज्जं ते मया दीयते तवोपतिष्ठतामिति दक्षिणाग्रां जलधारां सपवित्रकुशोपरि दद्यात् ।।६०।।

ततो नम्रीभूय पिण्डमाघ्रायोत्थापयेत् ।। छिन्नमूलकुशान् वह्नौ क्षिपेत्।। अर्घपात्रं संचाल्य सव्यं कृत्वा कुशादिसहितं दक्षिणाद्रव्यमादाय ।। अद्यामुकगोत्रस्यामुकप्रेतस्याऽऽ- द्यमासिकश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ।। स्वस्तीति प्रतिवचनम् ।। अत्र प्रदक्षिणीकरणं

फर्की अघोरः प्रेतोस्तु भनेर जलधारा पिण्डमाथि दिनु । यहाँ आशी प्रार्थना वर्जित छ। अनि अपसव्य भएर पवित्र कुश दुनामा अघि राखेकै पिण्डमा चढाइ दिनू। अनि गाईको दूधमा तिल हालेर इदमूर्ज्जं० मन्त्र पढी पिण्डमा चढाइदिनू ।।६०।।

अनुव्रजं न भवति।। ततोऽपसव्येन स्वस्त्यस्तु इत्युक्त्वा ब्राह्मणमुत्थाप्य शय्यायामुपवेशयेत् ।। ब्राह्मणचरणौ संवाह्य तं नमस्कुर्यात् ।। ततोऽञ्जनं कङ्कतिकां च ब्राह्मणायाऽर्पयेत् । स चाञ्जनं कङ्कतिकां चादाय शय्यायां मुहूर्त्तं विश्रामं कुर्यात् ।।६१।।

ततः कर्ता सव्यं कृत्वा । देवताभ्यः इति त्रिर्जपित्वा ।। अपसव्यं कृत्वा ।। श्राद्धीयदीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य सव्येनाचमनं कुर्यात्।। ततः श्राद्धसंपूर्णताकामः।। प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु च। स्मरणादेव तद्विष्णोः संपूर्णस्यादिति श्रुतिरिति पठित्वा विष्णुस्मरणं

---

अनि नम्र भएर पिण्डको वास्ना लिई उठाउनू । छिन्न मूल कुश आगोमा हालिदिनू। अर्घपात्र चलाइ दिनू । सव्य भएर दक्षिणा संकल्प - अद्य० देखि संप्रददे सम्म भन्नू । अनि अपसव्य भएर ब्रह्मणलाई उचाली शय्यामा वसाल्नु । अनि उनको पाऊ मिचेर नमस्कार गर्नु । अनि केही वेर ब्राह्मणलाई शय्यामा विश्राम गराउनू ।।६१।।

कुर्यात् ।। इति षोडशश्राद्धमध्ये आद्यमासिकस्य एकादशेह्न्येव विधानादाद्यमासिकस्य सपात्रप्रयोगः।।६२।।

अथ आद्याब्दिकश्राद्धम् ।। प्रथममासिकश्राद्धानन्तरं स्नानादिकं विधाय आद्याब्दिकश्राद्धं कुर्यात् ।। आद्याब्दिकस्य एकादशेऽह्न्येव विधानात्। तच्च सिद्धान्नेनैव विधेयम् ।। तत्र क्रमः।। कर्त्ता स्नातः शुचिरावान्तः पूर्वोपकल्पितप्रज्वालितदीपं स्थापितगौरसर्षपं तिलादिरक्षोघ्नं श्राद्धदेशमागत्य पूर्वाभिमुख उपविश्य कुशजलेन अपवित्रः पवित्रो वा सर्वेत्यादि पठित्वा पुण्डरीकाक्षः पुनात्विति ऊच्चार्य्य श्राद्धदेशं द्रव्याण्यात्मानं च सिंचेत् । अद्येत्यादि देशकालौ स्मृत्वा ।। अद्यामुक-

अनि कर्तालि सव्य भएर देवताभ्यः० तीन पल्ट पढ्नू । अपसव्य भएर बत्ती ढाकिदिनू। अनि हात - पाऊ पखालेर सव्य भई आचमन गर्नु । अनि प्रमादात् पढेर विष्णुको स्मरण गर्नु । अब आद्यमासिक समाप्त भयो ।।६२।।

गोत्रस्यामुकप्रेतस्याद्याब्दिकश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ।। ततो देवताभ्यः इत्यादि त्रिः पठेत् । ततोऽपसव्येन कुशादिकमादाय अद्यामुकगोत्रस्यामुकप्रेतस्याद्‌याब्दिकश्राद्धे इदमासनं ते मया दीयते तवो-पतिष्ठतामिति कुशरूपमासनमुत्सृजेत् ।। ततः अपहताऽसुरा रक्षाꣳसि वेदिषदः इति वामवर्त्तेन तिलान् श्राद्धदेशे विकिरेत् ।। ततः पुटकादौ पवित्रेस्थ इति मन्त्रेण दक्षिणाग्रं पवित्रं धृत्वा ।। शन्नो देवीति मंत्रेण तत्र जलं क्षिपेत् ।। तिलोसीति मंत्रेण तिलान् प्रक्षिप्य, गन्धद्वारामिति मंत्रेण गन्धं, श्रीश्चतेति मन्त्रेण पुष्पं क्षिपेत् ।। ततस्तदर्घपात्रं वामहस्ते

अब आद्याब्दिक श्राद्धमा- प्रथम मासिक श्राद्ध सकिए पछि स्नान गरी आद्याब्दिक श्राद्ध गर्नु । आद्याब्दिकको एकादशाहकै दिन गर्नु भन्ने पाईन्छ । त्यो गर्ने क्रमः - कर्ताले स्नान गरेर आसनमा बसी पहिले बत्ती बाल्नु र बत्तीको पूजा गरेर - पूर्वतिर फर्किई कुश र जलले अपवित्र० तीन पल्ट पढेर पुण्डरीकाक्षः पुनातु भनेर सबैतिर जल

कृत्वा पुष्पसहितं पवित्रं नमो नारायणायेति मंत्रेणाऽन्नपात्रोपरि उत्तराग्रं धृत्वा या दिव्या आप इति मंत्रेणार्घपात्रस्थजलमभिमंत्र्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेताद्याब्दिकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि अर्घजलं दददुत्सृजेत्।। ततः पवित्रादिसहितमर्घपात्रं आसनवामपार्श्वे प्रेताय स्थानमसीत्युत्तानमेव स्थापयेत् ।।६३।।

ततो गन्धादिना संपूज्य कुशादीन्यादाय ।। अद्यामुकगोत्रा-

छर्किदिनु । अनि प्रतिज्ञा संकल्प मूल अनुसार गरेर देवताभ्यः० तीन पल्ट पढेर अपसव्य भई संकल्प गर्दा 'अद्यामुक० देखि तवोपतिष्ठाम्' सम्म भनेर कुशको आसन दिनु अनि 'अपहता०' पढेर सबैतिर तिल छर्कि दिनू । अनि दुनामा पवित्रेस्थो० शन्नोदेवी० तिलोसि०, श्रीश्चते० गन्धद्वारा० मन्त्र पढेर बायाँ हातमा उचाल्नु अनि फूल पवित्र समेत 'नमो नारायणाय' भनेर बाहुनमा राख्नु। अनि या दिव्या मन्त्र पढेर दुना ढाक्नु, अनि कुश जल लिएर संकल्प गर्दा अद्या० तवोपतिष्ठताम् सम्म पढी

मुंकप्रेताद्याब्दिकश्राद्धे एतानि गंधपुष्पाक्षधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्तामिति गंधादिकमुत्सृजेत् ।। ततः आसनस्थान्नपात्रसहितस्य चतुर्दिक्षु चतुरस्रं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं घृततिलजलयुतं पुटकादौ कृत्वा ।। इदमन्नमेतद्भूस्वामिपितृभ्यो नम इत्युत्सृजेत् ।। ततः पुरुषतृप्तिक्षमं सोपस्करं सतिलं चान्नमुपनीय मधुनाभिघार्य्य पात्रालम्भनाङ्गुष्ठावगाहनं विना ।। पृथिवी ते पात्रं द्यौरपिधानं इत्यादि स्वाहान्तं, इदं विष्णुरित्यादि सुरेत्यन्तं पठित्वा, अपहता असुरा रक्षाꣳसि

---

दुनाको अलिकति जल बाहुनमा चढाई फूल पवित्र फेरी दुनामै राखी बाहुनको बायाँतिर प्रेताय स्थानमसि भनेर उत्तानै राखिदिनु ।।६३।।

अब ब्राह्मणको पूजा गरेर संकल्प मूल अनुसार गरिदिनू । अनि जलले चारपाटे मण्डल बनाई एउटा सीधा वा पक्वान्न राखेर तिल घृत मधु जल हाली कुश लिएर 'इदमन्नं सजलं एतद् भूस्वामी पितृभ्यो नमः' भनेर छाडिदिनू अनि अर्को सीधा राखेर

वेदिषद इति तिलान्नन्नोपरि विकीर्य कुशादिकमादाय अद्यामुकगोत्रा-यामुकप्रेताद्याद्विकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठता-मित्यन्नमुत्सृजेत् । ततो मधुव्वाता इति ऋचं मधु मधु मध्विति पठेत्।। अन्नहीनमित्यादि मन्त्रं, नमस्तुभ्यं विरुपाक्षेति श्लोकं च पठेत् । अत्र विकीरो रेखाकरणमुल्मुकभ्रमणं न भवति ।। सव्यंकृत्वाऽऽचम्याऽपसव्यं कृत्वा पिण्डस्थानोपरि छिन्नमूलकुशान् दक्षिणाग्रानास्तीर्य्य तिलजलगंधयुतं पुटकं वामहस्ते कृत्वा कुशादिकमादाय अद्यामुकगोत्रामुकप्रेताद्याब्दि-कश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठतामित्यवनेजनं

तिल, घृत, मधु जल छरी पृथिवी ते पात्रं पढेर इदं विष्णु० र अपहताऽ असुरा० ले सीधाको वरिपरि तिल छर्कि दिनु । अनि कुश लिएर संकल्प अद्यामुक० तवोपतिष्ठताम् सम्म भन्नू । अनि मधुव्वाता० तीन मन्त्र र अन्नहीनं० पनि पढ्नु पर्दछ । अनि सव्य भएर आचमन गरी अपसव्य भएर वेदीमा कुश बिछाउनू । र कुश जल लिएर संकल्प

छिन्नमूलकुशोपरि दद्यात् ।। ततस्तिलघृतमधुयुक्तेनान्नेन कपित्थप्रमाणं पिण्डं कृत्वा कुशादिकमादाय अद्यामुकगोत्रामुकप्रेताद्याब्दिकश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामित्यवनेजनस्थाने पिण्डं दद्यात्।। ततो दर्भमूलेन करं प्रोक्ष्य ।। सव्यं कृत्वाऽऽचम्य हरिंस्मृत्वाऽऽपसव्यं कृत्वा मंत्रपाठं विना तूष्णीं भास्करमूर्तिप्रेतं चिंतयेत् ।। ततोऽवनेजनपात्रं वामहस्ते कृत्वा कुशादिकं गृहीत्वा ।। अद्यामुकगोत्रामुकप्रेताद्याब्दिक-श्राद्धपिण्डे इदं प्रत्यवनेजनं ते मया दीयते तवोपतिष्ठातामिति प्रत्यवनेजनं पिण्डोपरि दद्यात् ।। ततो नीवीं विस्रंस्य ।। सव्यं कृत्वाऽऽचम्याऽपसव्यं

अद्यामुक० देखि तवोपतिष्ठताम् सम्म पढेर आसन दिएर घिउ मह युक्त पिण्ड कुश जल लिएर संकल्प अद्यामुक० देखि उपतिष्ठताम् सम्म पढेर आसनमाथि पितृतीर्थले राखि दिनू । बिछाएको कुशले हात पुछेर सव्य भई आचमन गरी हरि स्मरण गर्नु। अनि अपसव्य भएर सूर्यरूपी प्रेतको स्मरण गरी फूल अक्षता पिण्डमा चढाइदिनू । अनि

कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय उभाभ्यां हस्ताभ्यां पिण्डोपरि प्रेतैतत्ते वासः इति सूत्रं दद्यात् ।।६४।

ततः पिण्डमभ्यर्च्य कुशादीन्यादाय । अद्यामुकगोत्रामुकप्रेताद्याब्दिक-श्राद्धपिण्डे एतानि सूत्रगन्धपुष्पधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्तामित्युत्सृजेत्। ततः पिण्डशेषान्नं पिण्डसमीपे विकीर्य्य। शिवा आपः सन्तु इति जलम् ।। सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्त्विति तण्डुलान् अन्नपात्रोपरिक्षिपेत् ।। कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्याद्याब्दिकश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठता-मित्यक्षय्योदकं दत्वा ।। सव्यं कृत्वा ।। अघोरः प्रेतोस्तु इति दक्षिणां

---

अवनेजन संकल्प गरी पिण्डमा चढाउनू । अनि सव्यभएर आचमन गर्नु र अपसव्य भएर पिण्डमा सूत्र प्रेतैतत्ते वासः भनेर चढाइदिनू ।।६४।।

६५. अब पिण्डको पूजा गरेर संकल्प मूल अनुसार गर्नू। अनि पिण्ड शेष पिण्डको

दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ।। अत्राशीः प्रार्थनं न भवति।। ततः पिण्डोपरि सपवित्रान् कुशान् धृत्वा ।। पुटकादिस्थ-जलादिना मंत्रपाठं विना । इदमूर्ज्जन्ते मया दीयते तवोपतिष्ठतामिति सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्यात् ।। ततः पिण्डमाघ्रायोत्थापयेत् ।। पिण्डधारकुशान् वह्नौ क्षिपेत् ।। अर्घपात्रं संचाल्य ।। सव्यं कृत्वा कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्याद्याब्दिक-श्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय यथा नामशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात्।। ततो देवताभ्यः पितृभ्यश्च महायोगीभ्य एव च ।। नमः स्वाहायै स्वधायै नित्यमेव नमो

---

नगीचै राखिदिनू । अनि ब्राह्मणमा मूल अनुसार वाक्य भन्दै जल फूल अक्षता चढाउनू। अनि अक्षय्योदको संकल्प पढेर पिण्डमा चढाउनू । यसमा आशिष प्रार्थना निषेध छ। अब अर्घको फूल पवित्र पिण्डमा चढाएर - इदमूर्जन्ते० पढेर जल धारा दिनू । अनि

नमः।। इति त्रिः पठेत् ।। ततोऽपसव्यं कृत्वा दीपमाच्छाद्य।। हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य।। प्रमादात्कुर्वतां कर्म प्रच्यवेताऽध्वरेषु च।। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिरिति पठित्वा विष्णुस्मरणं कुर्य्यात् ।। श्राद्धीयवस्तु ब्राह्मणाय प्रतिपादयेत्।। सिद्धान्नं जले क्षिपेत्।। इत्याद्याब्दिकश्राद्धप्रयोगः ।।६५।।

अत्र दिने विहितमपि पंचगव्यप्राशनं शिष्टानाचरन्तीति न लिखितम्।। अथोदकुम्भदानम् ।। तत्र हारीतः ।। मृते पितरि वै पुत्रः पिण्डमब्दं

---

नम्र भएर बास्ना लिई पिण्ड उठाउनू र बिछाएको कुश आगोमा हालिदिनू । अनि अर्घ पात्र चलाई सव्य भएर मूल अनुसार संकल्प पढी ब्राह्मणलाई दक्षिणा दिनू । अनि देवताभ्यः तीन पल्ट पढेर अपसव्य भई बत्ती ढाकिदिनू र सव्य भएर आचमन गरी प्रमादात् पढेर विष्णुः तीन पल्ट पढ्नू। अनि श्राद्ध-सामग्री ब्राह्मणलाई दिनू, सिद्धान्न जलमा बगाइदिनू ।।६५।।

इति आद्याब्दिक श्राद्ध समाप्त ।

समापयेत् ।। अन्नं कुम्भं च विप्राय प्रेतमुद्दिश्य धर्मतः ।। मत्स्यपुराणे।। यावदब्दं तु यो दद्यादुदकुम्भं विमत्सरः ।। प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ।। याज्ञवल्क्यः ।। अर्वाक्सपिण्डीकरणं यस्य संवत्सरोद्भवेत्।। तस्याप्यन्नं सोदकुम्भं द्वयं दद्याद् द्विजन्मने ।। अङ्गिराः।। यस्य संवत्सरादर्वाक्सपिण्डीकरणं कृतम् । मासिकं चोदकुम्भं च देयं तस्याऽपि वत्सरम् ।।

अथ प्रयोगः।। एकादशेह्नि ।। कर्त्ता शुचिराचान्तः प्राङ्मुख उपविश्य।। सव्येन कुशतिलजलान्यादाय अद्य पितृगताहरहन्नोपस्थितिश्वगताश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामोऽद्यादिपितृमरणदिनावधिकाशौचावच्छिन्नदिनोनवत्सरं यावत्प्रत्यहममुकगोत्रायामुकप्रेताय

अब सान्नोदककुम्भ दानमा - हारीत, मत्स्य पुराण, याज्ञवल्क्य र अंगिरा आदिका वचन हेर्नु। अनि एघारौं दिन कर्ता नित्यक्रिया सकेर सव्य भएर प्रतिज्ञा संकल्प मूलमा

सान्नोदककुम्भदानमहं करिष्ये इति संकल्प्याऽपसव्यं कृत्वा कुशादी-न्यादाय अद्यामुकगोत्रास्यामुकप्रेतस्येदमासनं ते मया दीयते तवोपतिष्ठता-मित्यासनमुत्सृज्य गंधपुष्पादिना पूजां विधाय कुशादीन्यादाय अद्यामुक-गोत्रामुकप्रेतैतानि गंधपुष्पधूपदीपवासांसि ते मया दीयन्ते तवोपतिष्ठन्ता-मित्युत्सृज्य सोपस्करमन्नं नवजलपूर्णकुम्भं चोपनीय कुशादीन्यादाय।। अद्यामुकगोत्रायामुकप्रेताय अयं सान्नोदककुम्भस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ।। वर्षाभ्यंतरे सपिण्डने कृते ।। अद्यामुक गोत्र पितामुकशर्मन् एतानि गंधपुष्पधूपदीपवासांसि तुभ्यं स्वधा। अद्यामुकगोत्राय पित्रे अमुकशर्मणे अयं सान्नोदककुम्भस्तुभ्यं स्वधेति वाक्यं कुर्यात् ।। ततः कुशादीन्यादाय ।। अद्यकृतैतत्सान्नोदककुम्भदान-

छ पढ्नू । अनि अपसव्य भएर कुश-जललिई संकल्प गर्दा - अद्य पितृगताहरहन्नो० देखि कुम्भदानमहं करिष्ये मन्त्र पढ्नू । अनि अपसव्य भएर फेरि संकल्प गरेर आसन

प्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय यथा नाम शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ।। इति दक्षिणामुत्सृज्य।। दक्षिणा तदुभयं च ब्राह्मणाय दद्यात् ।। एवं वर्षपर्यन्तं प्रत्यहं सान्नोदक-कुम्भं दत्वा दक्षिणां दद्यात् । अशक्तौ प्रतिमासम् ।। अत्यन्ताशक्तौ तद्दिने एव दद्यात् ।। तत्र तु अद्यपितृगताहरहरन्नोदककुम्भोपस्थितिश्वगताश्वमेधयज्ञजन्यफल-प्राप्तिकामोऽद्य सान्नोदककुम्भदानमहं करिष्ये ।। इति सव्येन वाक्यं कृत्वा अपसव्येन आसनादिवाक्यं पूर्ववद्विधाय।। आशौचान्तदिनोनान्-वत्सरदिनसंख्याकान्सान्नोदककुम्भानुपनीय ।। अद्यामुकगोत्रायामुकप्रेताय मरणादिनावधिकाशौचावच्छिन्नदिनोनवत्सरं यावद्दिनसंख्याकाः एते सान्नोदककुम्भास्ते मया दीयन्ते तवोपतिष्ठन्तामिति वाक्यं कुर्यात्।।

दिनू । अनि पूजा गरेर फेरी पूजाको संकल्प पढेर जल दिनु । अब ३६० घडाको संकल्पमा- अद्य देखि० तवोपतिष्ठताम् सम्म पढ्नू । तत्काल सपिण्डी गर्ने हो भने मूल अनुसार संकल्प गरे पनि हुन्छ । अनि कुम्भ दानको प्रतिष्ठा, दक्षिणा पनि संकल्प गरेर

दक्षिणा वाक्यं पूर्ववत्कृत्वा सर्वं ब्राह्मणाय दद्यात् ।।६६।।

*इत्युदककुम्भदानविधिः।।*

अथोनमासिकादिपञ्चदशश्राद्धानि ।। उनमासिकादि च एकादशे द्वादशाहे वा सिद्धान्नेन आमान्नेन वा कार्याणि।। आमपक्षे यवचूर्णेन पिण्डाः कार्याः।। तानि च शिष्टा अपात्रकान्येव कुर्वन्तीति स एव प्रयोगो लिख्यते ।। तत्र क्रमः।। कर्त्ता स्नातः शुचिराचान्तः पूर्वोपकल्पितप्रज्वालितदीपं स्थापितगौरसर्षपतिलादिरक्षो- ध्नश्राद्धदेशमागत्य पूर्वाभिमुख उपविश्य । कुशजलेन अपवित्र इत्यादि पठित्वा पुण्डरीकाक्षः

---

दिनू । सके प्रतिदिन, नसके प्रत्येक महीना र असक्त भए त्यसै दिन गरे पनि हुन्छ ।।६६।।

*इति कुम्भदान विधिः।*

*अथोनमासिकादि पंचदशश्राद्धानि-* यो श्राद्ध एघारौं वा बाह्रौं दिन गरे पनि हुन्छ । यो जौको पीठोले गर्ने चलन पनि छ । अतः कर्ताले नित्य क्रिया सकेर शुद्ध आसनमा

पुनात्वित्युच्चार्य्य श्राद्धदेशं द्रव्याण्यात्मानं च सिंचेत् ।। अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्युत्तमलोकप्राप्तिहेतो षोडशश्राद्धान्तर्गतोनमासिकश्राद्धमहं करिष्ये इति संकल्पं कुर्यात् ।। ततो देवताभ्यः पितृभ्यश्चेति पठेत् ।। ततोऽपसव्येन कुशादीन्यादाय।। अद्यामुकगोत्रस्यामुकप्रेतस्योनमासिकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठतामिति कुशरूपमासनमुत्सृजेत् ।। ततः अपहताऽसुरा रक्षाꣳसि व्वेदिषदः इति वामावर्त्तेन तिलान् श्राद्धदेशे विकिरेत् ।।६७।।

बसी बत्ती बालेर उसको पूजा गरेर पहेंलो सर्स्यूं सबैतिर छर्केर पूर्व फर्की तिल-कुश लिएर अपवित्रः० पढ्दै जल छर्किनु र पुण्डरीकाक्षः पुनातु भनी त्यही कुशले संकल्प गर्दा अमुक गोत्रस्य० देखि उनमासिक श्राद्धमहं करिष्ये सम्म पढ्नू । अनि देवताभ्यः० तीन पल्ट पढी अपसव्य भएर कुश जल लिई संकल्प गर्दा अद्य० देखि तवोपतिष्ठताम् सम्म भनी आसन दिनू । अनि अपहता० पढेर चारैतिर तिल छरी दिनू।।६७।।

ततः पुटकादौ पवित्रेस्थ इति मन्त्रेण दक्षिणाग्रं पवित्रं धृत्वा ।। शन्नोदेवीति मन्त्रेण तत्र जलं क्षिपेत् ।। तिलोऽसीति मन्त्रेण तिलान् प्रक्षिप्य ।। गंधद्वारामिति मंत्रेण गन्धम् ।। श्रीश्चतेति मंत्रेण पुष्पं क्षिपेत्। ततस्तदर्घपात्रं वामहस्ते कृत्वा पुष्पसहितं पवित्रं नमो नारायणायेति मंत्रेणान्नपात्रोपरि उत्तराग्रं धृत्वा ।। या दिव्या इति मंत्रेण पात्रान्तस्थ-जलमभिमंत्र्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेतोनमासिदकश्राद्धे एष हस्तार्घहस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि अर्घजलं दददुत्सृजेत् ।। ततः पवित्रादि सहितमर्घपात्रं आसनवामपार्श्वे प्रेताय

अनि ब्राह्मणको अगाडि एउटा दुना राखेर त्यसमा पवित्रेस्थो० यस मन्त्रले पवित्र राख्नु । शन्नोदेवी० ले जल, तिलोसि. ले तिल, गन्धद्वारा०ले चन्दन० श्रीश्चते० यसले फूल राख्नू । अनि त्यो दुना बायाँ हातमा उचालेर फूल पवित्र ब्राह्मणमा घुमाई नमो नारायणाय भनेर राखिदिनू । अनि या दिव्या० मन्त्र पढेर दुना ढाकिदिनू र कुश लिएर

स्थानमसीत्युत्तानमेवस्थापयेत् ।। ततो गन्धादिना संपूज्य कुशादीन्यादाय अद्यामुकगोत्रामुकप्रेतोनमासिकश्राद्धे एतानि गन्धपुष्पाक्षतधूपदीपनैवेद्य-वासांसि ते मया दीयंते तवोपतिष्ठन्तामिति गंधादिकमुत्सृजेत् ।।६८।।

ततः आसनस्यान्नपात्रसहितस्य चतुर्दिक्षु चतुरस्त्रं मण्डलं कृत्वा ।। श्राद्धीयान्नग्रभागं घृततिलजलयुतं पुटकादौ कृत्वा ।। इदमन्नमेतद् भूस्वामिपितृभ्यो नमः इत्युत्सृजेत् ।। ततः पुरुषतृप्तिक्षममन्नं सोपस्करण-मुपनीय सतिलजलश्चान्नं चोपनीय अन्नं मधुनाभिघार्य्य ।। पात्रालंभ-नाङ्गुष्ठावगाहनं विना ।। पृथिवी ते पात्रं द्यौरपिधानमित्यादि स्वाहान्तं

संकल्पमा अद्य० देखि तवोपतिष्ठताम् भनेर दुनाको जल अलिकति बाहुनमा चढाई फूल पवित्र फेरि दुनामै राखी प्रेताय स्थानमसि, भनेर उत्तानै राखि दिनू । अनि ब्राह्मणको पूजा गरेर मूल अनुसार संकल्प गर्नू ।।६८।।

अनि ब्राह्मणको अगाडि जलले चारपाटे धर्का बनाई एउटा सिधा वा पक्वान्न राखेर

इदं विष्णुरित्यादि सुरे इत्यन्तं मंत्रं पठित्वा ।। अपहताऽअसुरा रक्षाꣳसि वेदिषदः ।। इति तिलानन्नोपरि विकीर्य्य कुशादिकमादाय ।। अद्यामुकगोत्रायामुकप्रेतायोनमासिकश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्यन्नमुत्सृजेत् ।। ततो मधुवाता इति ऋचः मधु मधु मध्विति वदेत् ।। अन्नहीनमित्यादि मन्त्रः ।। नमस्तुभ्यं विरूपाक्षेति श्लोकं पठेत् ।। अत्र विकिरो रेखाकरणमुल्मुकभ्रमणं च न भवति।। सव्यं कृत्वाचम्याऽपसव्यं कृत्वा पिण्डस्थानोपरि छिन्नमूलकुशान् दक्षिणाग्राना-

तिल, घिउ, मह छरी कुश-जल लिएर 'भूस्वामी पितृभ्यो नमः' भनेर छाडिदिनु० अनि अर्को सिधा वा पक्वान्न राखी तिल, घिउ, मह छरी पृथिवी ते पात्रं० इदं विष्णु० मन्त्र पढी अपहता असुरा० पढ्दै अन्नको वरिपरि तिल छर्किई संकल्पमा अद्य० तवोपतिष्ठनाम् सम्म पढी जल कुश छाडिदिनु । अनि मधुव्वाता० तीनमन्त्र पढी, अन्न हीनं० आदि पनि पढ्नु पर्दछ । अनि अपसव्य भएर वेदीमा छिन्नमूल कुश बिछाउनु । यहाँ विकिर रेखा र आगो घुमाउने निषेध छ । अब संकल्प गर्दै पिण्डस्थानमा आसन राख्नु।

सङ्कल्प भन्नु - ॐ अद्यामुकगोत्राऽस्मत्पितरमुकशर्मन् पाथेयश्राद्धे एष पिण्डोऽमृतस्वरूपो अक्षय्यतृप्तिहेतोस्ते स्वधा, भनेर अवनेजनमाथि पिण्ड दिनु ।। आस्तृतकुशमूलले 'लेपभागभुजस्तृप्यन्तु' पुच्छ्नु र सव्य भएर आचमन गर्नु । अनि चन्दन, फूल, आदि लिएर पितृलाई संझदै यो मन्त्र पढनु - ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्, भनेर उत्तराभिमूख भई श्वास रोकेर सूर्यको ध्यान गरी अपसव्य भएर चढाउनु - ॐ अमीमदन्त पितर०' यो मन्त्रले पिण्डमा फूल, चन्दनादि चढाए पछि मोटक लिएर सङ्कल्प गर्नु- ॐ अद्यामुकगोत्राऽस्मपत्पितर-मुकशर्मन् पाथेय श्राद्धपिण्डे इदं प्रत्यवनेजनं ते स्वधा भनेर प्रत्यवनेजन पिण्ड माथि दिनु । त्यसपछि ॐ नमो वः पितर० यो मन्त्र पढेर पिण्डमाथि सूत्र चढाउनु ।।गन्ध-पुष्पआदिले पूजा गरेर धूप-दीप पनि

गर्नु।। मोटक लिएर ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् पाथेयश्राद्धपिण्डे एतानि सूत्रगंधपुष्पाक्षतधूपदीपैक्षवादि नैवेद्यानि ते स्वधा, भनेर चन्दन आदि चढाउनु ।। ततः ॐ शिवा आपः सन्तु इति जलम् ।। ॐ सौमनस्यमस्तु इति पुष्पम् ।। ॐ अक्षतञ्चारिष्टमस्तु इति तण्डुलान् अन्नपात्रोपरि क्षिपेत् ।। सव्यं कृत्वा कर्मपात्रोदकं कुशैर्गृहीत्वा प्रतिमन्त्रं स्वशिरस्यभिषिंचेत् ।। ॐ अस्मत्कुले दीर्घमायुरस्तु ।। ॐ शान्तिरस्तु।। ॐ पुष्टिरस्तु ।। ॐ वृद्धिरस्तु ।। ॐ यच्छ्रेयस्तदस्तु ।। ॐ यत्पापं तत्प्रतिहतमस्तु इति भूमौ ।। ॐ द्विपदेचतुष्पदेभ्यः शान्तिरस्तु इति अभिषिञ्चेत् ।। ततः अपसव्येन मोटकादीन्यादाय ॐ अद्यामुक-गोत्रस्यास्मत्पितुरमुकशर्मणः पाथेयश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमस्तु भनेर अक्षय्योदक दिनु र सव्य भएर दक्षिण दिशा हेर्दै ॐ अघोरः

पिताऽस्तु भनेर पूर्वाग्र गरी जलधारा दिनु । त्यसपछि सव्यले नै पूर्वमुख गरी आशिष प्रार्थना गर्नु- गोत्रन्नो वर्द्धन्ताम् ।। वर्द्धन्ताम् इति प्रतिवचनम् ।। ॐ दातारो नोभिवर्द्धन्ताम् ।। ॐ वर्द्धन्तामिति प्रतिवचनम् ।। ॐ वेदाः सन्तु ।। ॐ सन्त्विति प्रतिवचनम् ।। ॐ संततिरस्तु ।। ॐ संत्विति प्रतिवचनम् ।। श्रद्धा च नो मा व्यगमत् ।। ॐ मागात् इति प्रतिवचनम् ।। ॐ बहुदेयं च नोऽस्तु ।। ॐ अस्त्विति प्रतिवचनम् ।। ॐ अन्नं च नो बहु भवेत् ।। ॐ भवतु ।। ॐ अतिथींश्च लभेमहि ।। ॐ लभध्वम् ।। याचितारश्च नः सन्तु ।। ॐ सन्त्विति प्रतिवचनम्।। ॐ मा याचिष्म कञ्चन ।। ॐ मा याचेथा इति प्रतिवचनम् ।। ॐ एताः सत्याशिषः सन्तु ।। ॐ संत्विति प्रतिवचनम्।।

त्यसपछि श्राद्धकर्ताले कुशका ब्राह्मणका हातबाट तिलक लगाउनु।

त्यसपछि अपसव्य भएर पिण्डमाथि पवित्रसहितको कुश राखिएको जल चढाउनु । अनि ॐ ऊर्ज्जम्वहन्तीत्यादि मन्त्र पढी दक्षिणतर्फ धारो पारी पिण्डमा दूध चढाउनु र सव्य भएर नम्र हुँदै पिण्ड सुँघ्नु । अपसव्यले पिण्ड उठाउनु पिण्डाधारमा राखिएको कुश र अगुल्ठो अग्निमा राख्नु । सव्य भएर पिण्डिकामा शङ्ख र चक्र लेख्नु ।। पूजा गर्नू- ॐ शङ्खाय नमः।। ॐ चक्राय नमः।। ॐ शङ्खचक्रा-भ्यां नमः। अपसव्य भएर मौन बनी पिण्ड पिण्डिकामाथि राखी सव्यले ॐ वसन्ताय इत्यादि मन्त्रले पूजन गर्नु। त्यसपछि अपसव्य भएर अर्घपात्र उत्तानो गराउनु । सव्यले दक्षिणाद्रव्य र कुशादि लिएर सङ्कल्प गर्नु- अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः कृतैतत्पाथेयश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं तन्निष्क्रयद्रव्यं वा यथानामदैवतं यथानामगोत्राय यथानाम-

शर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे' भनेर दक्षिणा दिनु, त्यस पछि अपसव्य भएर ॐ वाजे वाजे० यो मन्त्रले पितृविसर्जन गर्नु।। ततः सव्येन ॐ देवताभ्यः इति त्रिः पठेत् ।। अपसव्येन दीपाच्छादनं विधाय । सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य प्रमादादिति पठित्वा विष्णुं स्मरेत् ।। श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् ।। इति पाथेयश्राद्धं सम्पूर्णम् ।।

## अथ पञ्चकमरणविधिः

गरुड़पुराणे- आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम् ।। रेवत्यन्तं सदा दुष्यं न शुभं सर्वदा भवेत् ।। दाहस्तत्र न कर्त्तव्यो विषादः सर्वजन्तुषु । न दीयते जलं तत्र ह्यशुभं सर्वदा भवेत् ।। पञ्चकानन्तरं कार्यं कर्त्तव्यं सर्वमन्यथा।। पुत्राणां गोत्रिणां तस्य सन्तापो ह्युपजायते।

गृहे हानिर्भवेत् तस्य ऋक्षेष्वेषु मृतस्तु यः।। ब्रह्मपुराणे - कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते।। न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत् । न तस्य दाहः कर्त्तव्यो विनाशः स्वेषु जन्तुषु । पञ्चकानन्तरं सर्वं कार्यं दाहादिकं खलु ।। अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकः ।। धनिष्ठापञ्चके जीवो मृतो यदि कथंचन ।। त्रिपुष्करे याम्यभे च कुलजान्मारयेद् ध्रुवम् ।। तत्रानिष्टविनाशार्थं विधानं समुदीर्यते ।। दाहदेशं शवं नीत्वा स्नापयेच्च प्रयत्नतः ।। दर्भाणां प्रतिमाः कार्या पञ्चोर्णासूत्रवेष्टिताः।। यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् ।। प्रेतवाहः प्रेतसखःप्रेतपः प्रेतभूमिपः ।। प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात् ।। सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् ।। कांस्यपात्र-स्थितं तैलं वीक्ष्य दद्याद् द्विजन्मने ।। ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः।। माषमुद्गयवव्रीहिप्रीयंग्वादि प्रयच्छति।। स्वर्णदानं रुद्रजाप्यं

लक्षहोमो द्विजार्चनम् ।। गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये।। इति पंचकमरणविधिः।।

धनिष्ठाको उत्तरार्द्धबाट रेवतीको अन्तिम पाउसम्म 'पञ्चक' भनिन्छ ।

यस अवधिमा मृत्यु हुनाले मृतक मृतकका परिवारलाई समेत अनिष्ट हुने भएकोले शवदाहका समयमा र चोखिने दिन विषेश विधिद्वारा कर्म गर्नुपर्छ ।

## अथ पञ्चकमरणप्रयोगः

कर्ता सव्य भई पूर्वाभिमुख हुने र कुश-तिल-जल आदि लिएर- अद्येहेत्यादि अमुकगोत्रस्यामुकप्रेतस्य धनिष्ठादिपंचकमरणविधिं करिष्ये, भनेर संकल्प गर्नु र चन्दन, माला आदिले पाँच ओटा कुशको प्रतिमालाई सिंगारी ऊनले बेह्री जौको पीठोले लेपन गरी शव दाहको समयमा प्रेतमाथि यसरी राख्नु- प्रेतवाह प्रतिमां शिरसि ।। प्रेतसखप्रतिमां नेत्रयोः, प्रेतप्रतिमां बाहुकुक्षौ ।। प्रेतभूमिपप्रतिमां नाभौ।। प्रेतहर्तुप्रतिमां

पादयोः।। ती पाँचओटा कुशको प्रतिमा (पुतला) लाई तल लेखिएका मन्त्रहरू पढी घिउको आहुति दिनु । यमाय सोमं मधुमत्तयेषां ते नो गावः स्वदन्तु हव्या ।। दूतं वा देवः स्वदममुमेषा ते नो रासत मुरुगाय मह्या यूयं पातःस्वस्तिभिः सदा नः।। त्र्यम्बकं यजामहे सुगन्धिम्पुष्टि-वर्द्धनम् ।। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्' भनेर ती प्रतिमाहरू प्रत्येकमा एक-एक पटक घिउको आहुती दिनु र पञ्चोदकको धारा दिएर शवदाह गर्नु । इति पञ्चकमरणदाहविधिः।।

## अथ मासिकश्राद्धविधिः

आद्यमासिकश्राद्धमा सान्नोदककुम्भोत्सर्गान्नसंकल्पविधिः।। गाईको गोबरले लिपिएको भूमिमा पूर्वमुख गरी बस्नु र बत्ती जलाई आचमन

गर्नु र 'ब्राह्मणाय नमः' भनेर ब्राह्मणलाई पूजा गरी दक्षिण फर्कनु र अपसव्य भई यो सङ्कल्प भन्नु ।। ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः अद्य कर्त्तव्यामुकमासिकश्राद्धे अनेन ताम्बूलगंधपुष्पाक्षतेन त्वं मया निमन्त्रितः ।। ॐ निमन्त्रितोऽस्मीति प्रतिवचनम् ।। अक्रोधनै इत्यादि मन्त्र पढ्नु र ॐ नमोस्त्वनन्ताय इत्यादि मन्त्रले ब्राह्मणको पाउ धुनु । त्यसपछि जल रहेको दुनो बायाँ हातमा लिई मोटक लिई त्यो दुनो छुनु- ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन्नेष पादार्घस्ते स्वधा।। सव्य भई आचमन गर्नु र घरमा प्रवेश गराएको भावना गरी फेरि अपसव्य हुनु र यो शब्द भन्नु - ॐ आगता यूयं ॐ सुस्वागता वयं ।। ॐ इदमासनमास्यताम्।। ॐ आस्यते प्रतिवचनम् ।। ब्रह्मणलाई उत्तरमुख गरी स्थापना गर्नु । अनि ॐ कर्मपात्रमहं करिष्ये ।। ॐ कुरुष्वेति

प्रतिवचनम् ।। ॐ यद्देवादेवहेडनं इत्यादि मन्त्रले कर्मपात्र स्थापन गर्नु।। ॐ शन्नो देवीति जलम् ।। ॐ पवित्रेस्थ इति कुशान् ।। ॐ गंधद्वारामिति गन्धम् ।। ॐ अक्षन्नमीमदन्तेत्यक्षता: ।। ॐ तिलोसीति भनेर तिलहरू राख्नु । सव्य भई कर्मपात्रमा रहेको तीन ओटा कुश र जलसहितले अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।। यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।। पुण्डरीकाक्षः पुनातु भनेर आफू र श्राद्ध स्थल वरिपरि सेचन गर्नु । त्यसपछि कुशादि लिएर यो सङ्कल्प भन्नु- अद्येत्यादि पूर्वसंकल्पसिद्धिरस्तु अमुक मासिक सान्नोदककुम्भोपस्थितिस्वगताश्वमेध-यज्ञजन्यफलसमफलप्राप्तिका-मोऽमुकगोत्रस्यास्मत्पितुर-मुकशर्मणः सान्नोदककुम्भोत्सर्गान्नसंकल्पादि-कामुक मासिकश्राद्धमेभिर्द्रव्यैरहं करिष्ये भनेर प्रतिज्ञा गर्नु र ॐ

देवताभ्यः इत्यादि मन्त्र तीन पटक भन्नु । त्यसपछि दक्षिणाभिमुख भई सान्नोदक कुम्भ अगाडि राखी कुश लिई सङ्कल्प भन्नु - ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मण अमुकमासिकश्राद्धे इदमासनं तुभ्यं स्वधा भनेर कुम्भासनको नगीचै छाड्नु । त्यसपछि चन्दन, अक्षता, धूप, दीप, नैवेद्य, वस्त्र, द्रव्य आदिले ब्राह्मण र कुम्भको पूजा गरी मोटकादि लिएर ॐ अद्यामुकगोत्रास्मत्पितरमुकशर्मन् एतानि गंधपुष्पाक्षतधूपदीपैक्षवादि नैवेद्यताम्बूलवसद्रव्यपूगीफलयज्ञोपवीतादीनि तुभ्यं स्वधा, भनेर कुम्भको नगीचै छाड्नु । अनि चन्दन लिई ॐ गन्धद्वारान् इत्यादि मन्त्र पढी कुशको ब्राह्मणलाई तिलक लगाइदिनु । र मोटकादि लिएर सान्नोदक कुंभ छुनु - ॐ अद्यामुकगोत्रायास्मत्पित्रेऽमुकशर्मणे अयं सान्नोदककुंभस्तुभ्यं स्वधा भनेर कुशका ब्राह्मणका हातमा छोड्नु।

अथ भूस्वामी-घिउ, मह, जल सहितको अन्नमा मोटकादि लिएर छुनु - ॐ इदमामान्नं सजलमेतद्भूस्वामिपितृभ्यो नमः।। अथ अन्नसंकल्पः।। सबै परिकारले युक्त तिल, चीनि, जल सहितको अन्नलाई दुई हातले ढाकी विनम्र भावले अधोमुख गरी सो सिधा-अन्नपात्रलाई छोई निम्न मन्त्र पढ्नु - ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।। समूढमस्य पाꣳसुरे स्वाहा भनेर।। ॐ इदमन्नं । ॐ इमा आपः।। ॐ इदमाज्यं ।। ॐ इदं हविः।। ॐ एतान्युप करणानि० अन्न, जल आदि ब्राह्मणको दाहिने औंला समाएर सुम्पिएको भावना गर्नु । ॐ अपहता असुरारक्षासिवेदिषद भनेर अन्न वरिपरि तिलहरू छर्नु । त्यसपछि मोटकादि लिएर अद्यामुकगोत्रायास्मत्पित्रे ऽमुकशर्मणे इदमन्नं

सजलं सोपस्करं परिविष्टं परिवेष्यमाणमक्षय्यतृप्तिहेतोस्ते स्वधा भनेर मोटक भैंमा छोड्नु र ॐ अन्नसंकल्पसिद्धिरस्तु भवान्प्राशयतु भनेर आपोशन (जल) दिनु अनि सव्य भएर अञ्जलि जोरी सप्तव्याधा०' इत्यादि मन्त्रहरू पढ्नु - ॐ मधु० वातेति ऋचं ।। ॐ मधु ३ अन्नहीनं इत्यादि मन्त्रहरू पढी अपसव्य भएर ब्राह्मणका हातमा ॐ शिवा आपः सन्तु इति जलम् ॐ सौमनस्यमस्तु इति पुष्पम् ।। अक्षतं चारिष्टमस्तु भनेर चामलका अक्षताहरू चढाउनु र सव्य भई पूर्वाभिमुख हुनु र तलको मंत्र पढ्नु - ॐ अपां मध्ये स्थिताः देवाः सर्वमप्सु प्रतिष्ठितम् ।। ब्राह्मणस्य करे न्यस्तां शिवा आपो भवन्तु मे ।।१।। लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।। लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं ददातु मे । अक्षतञ्चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिस्तथा ।। यद्यच्छ्रेयस्करं

लोके तत्तदस्तु सदा मम ।। त्यसपछि कर्मपात्रको जल र कुश लिएर प्रत्येक मन्त्रले आफ्नो शिरमा सेचन गर्नु- ॐ अस्मत्कुले दीर्घमायुरस्तु।। ॐ शान्तिरस्तु !! ॐ पुष्टिरस्तु ॐ वृद्धिरस्तु ।। ॐ यच्छ्रेयस्तदस्तु ॐ यत्पापं तत्प्रतिहतमस्तु भनेर भूमिमा र ॐ द्विपदेचतुष्पदेभ्यः शान्तिर्भवतु।। यं कामं कामयते सोऽस्मै कामः समृद्ध्यताम्।। अनि निम्न मन्त्र पढी ब्राह्मणका हातबाट आफूले चन्दन लगाउनु त्यसपछि दक्षिणाको लागि तिल, कुश, जौ, जल, द्रव्य आदि लिएर- ॐ अद्यामुकगोत्रस्यास्मत्पितुरमुकशर्मणः कृतैतत्सान्नोदककुम्भोत्सर्गान्न-संकल्पादिकरूपममुक-मासिकश्राद्धप्रतिष्ठासाङ्गतासिध्यर्थमिमां दक्षिणां रजतं चन्द्रदैवतं यथानाम-गोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं सम्प्रददे ।। ॐ स्वस्ति इति प्रतिवचनम् ।। त्यसपछि अपसव्य

भएर बत्ती ढाकिदिनु र सव्य भएर हात पाउ धोई आचमन गर्नु र यो मन्त्र पढ्नु - ॐ यत्कृतं तत्सुकृतमस्तु, यन्न कृतं तद्विष्णोः प्रसादाद् ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु।। ॐ अस्तु परिपूर्णम् ।। ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेत्ताऽध्वरेषु च।। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः।। ततो विष्णुस्मरणम्।। त्यसपछि विष्णुको ध्यान गर्दै-ब्राह्मण विसर्जन गर्नु र स्वस्ति भन्नु । अनि कर्मपात्रको जलले परिक्रमा गर्नु- कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृति-स्वभावात्।। करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि । त्यसपछि ब्राह्मणद्वारा मन्त्र पढ्दै आशिष माग्नु र ब्राह्मणलाई भोजन गराउनु र आफूले पनि शुद्ध हविष्यान्न भोजन गर्नु ।

इति संक्षेपतो मासिकश्राद्धविधिः समाप्तः ।।

समाप्तेयं अन्त्यपद्धतिः

०००

# मध्यमषोडशीश्राद्धस्य कर्तव्यता

मलिनं षोडशं चैतत् प्रथमं परिकीर्तितम् ।
अन्यच्च षोडशं मध्ये द्वितीयं कथयामि ते ।।
प्रथमं विष्णावे दद्याद् द्वितीयं श्रीशिवाय च ।
याम्याय परिवाराय तृतीयं पिण्डमुत्सृजेत् ।।
चतुर्थं सोमराजाय हव्यवाहाय पञ्चमम् ।
कव्यवाहाय षष्ठञ्च दद्यात् कालाय सप्तमम् ।।
रुद्राय चाष्टमं दद्यान्नवमं पुरुषाय च ।
प्रेताय दशमं चैवैकादशं विष्णावे ततः ।।
द्वादशं ब्रह्मणे दद्याद् विष्णावे च त्रयोदशम् ।
चतुर्दशं शंभवे तु यमाय दशपञ्चकम् ।।

तत्पुरुषाय पक्षीश ! षोडशं पिण्डमुत्सृजेत् ।
मध्यं षोडशकं प्राहुरेतत् तत्त्वविदो जनाः ।।
द्वादश प्रतिमासेषु पाक्षिकं च त्रिपाक्षिकम् ।
न्यूनषाण्मासिकं पिण्डं दद्यान्यूनाद्विकं तथा ।।
उत्तमं षोडशं चैतन्मया ते परिकीर्तितम् ।
श्रपयित्वा चरुं तार्क्ष्य ! कुर्यादेकादशेऽहनि ।।
चत्वारिंशत्तथैवाष्टौ श्राद्धं प्रेतत्वनाशनम् ।
यस्य जातं विधानेन स भवेत्पितृपङ्क्तिभाक् ।।
पितृपङ्क्तिप्रवेशार्थं कारयेत् षोडशत्रयम् ।
एतच्छ्राद्धविहीनश्चेत् प्रेतो भवति सुस्थिरम् ।।
यावन्न दीयते श्राद्धं षोडशत्रयसंज्ञकम् ।
स्वदत्तं परदत्तं च तावन्नैवोपतिष्ठति ।।

*(गरुडपुराणस्य द्वादशाध्यायादुद्धृतानि पद्यानि)*

# एकादशाहकृत्यमध्यमषोडशीश्राद्धविधिः

## विधिनिरूपण

सर्वप्रथम कर्ताले स्नान सङ्कल्प पढी जौ, तिल र कुशसहित स्नान गर्नुपर्दछ । शुद्ध वस्त्र धारण गरी गाईको गोबरले लिपेको श्राद्ध गर्ने स्थानमा बसेर आचमन गरी पवित्र धारण गर्नुपर्दछ। कर्मपात्रका मन्त्र पढी कर्मपात्र तैयार गर्नुपर्दछ । तिलको तेल अथवा गाईको घिउमा बत्ती बालेर बत्तीको पूजा गरी जौ र फूलले भूमिको पूजा गर्नुपर्दछ ।

## विशेष

मध्यमषोडशीका १६ वटा पात्रब्राह्मण स्थापना गर्दा विष्णु, शिव, यम आदि १४ को एक पङ्क्तिमा स्थापना गरी दशौं प्रेत र सोह्रौं तत्पुरुषको अलग स्थापना गर्नुपर्छ । विष्णु आदि देवताका निमित्त कुश, जौ र जलको प्रयोग हुन्छ भने प्रेत र तत्पुरुषको निमित्त कुश, तिल र जलको प्रयोग हुन्छ ।

*स्नानसङ्कल्पः*- **अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तये सद्गतिप्राप्तये च मध्यमषोडशीश्राद्धनिमित्तं स्नानमहं करिष्ये** । इति सङ्कल्पः।

***पवित्रीकरणम्*** - यवतिलकुशसहितं स्नात्वा धौते वाससी परिधाय गोमयोपलिप्तं श्राद्धदेशमागत्य उपविश्य आचम्य कुशपवित्रधारणं कृत्वा देवकर्मपात्रं कुशासनोपरि स्थापयित्वा तत्र कुशजलतिलयवगन्धपुष्पाक्षतादीन् तत्तन्मन्त्रैर्निक्षिप्य तत्रस्थकुशखण्डत्रयसहितजलेन -

**ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।**
**यःस्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ।।**

***पुण्डरीकाक्षः पुनातु*** - इत्युक्त्वा स्वात्मानं श्राद्धीयवस्तूनि च सिञ्चेत्।

***दीपपूजनम्*** - ततस्तिलतैलेन गोघृतेन वा दीपं प्रज्वाल्य दीपं पूजयेत्।

***भूमिपूजनम्*** - यवपुष्पैः ॐ भूम्यै नमः इति भूमिं पूजयेत् ।

***पात्रब्राह्मणस्थानम्*** - श्राद्धस्थले षोडशपात्रब्राह्मणानां स्थापनं कार्यम् । मध्ये दशमषोडशयोः पृथक् पृथक् स्थापनं कार्यम् ।

**विधिनिरूपण**

पात्रब्राह्मणहरूको स्थापनापछि कुश, जौ र जल लिएर प्रतिज्ञा सङ्कल्प गरी देवताभ्यः० ३ पटक पढ्नुपर्दछ । नमो नमस्तेदेखि अनन्तकः सम्मका श्लोकहरू पढेर पूर्वादि दिशामा सर्स्यूं छर्कनुपर्दछ ।

***विशेष*** - स्त्री जाति भए गोत्रायाः, प्रेतायाः भन्नुपर्छ ।

***प्रतिज्ञासङ्कल्पः*** - कुशयवजलान्यादाय- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तिपूर्वक-सद्गतिनिवारणार्थमुत्तमलोकप्राप्त्यर्थं मध्यमषोडशीश्राद्धं तन्त्रेणाऽहं करिष्ये** । इति।

**देवपितृप्रार्थना**

**ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।**
**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ।**

इति त्रिर्जपेत् । गौरसर्षपान् पूर्वादिदिक्षु विकिरेत् -

**ॐ नमो नमस्ते गोविन्द पुराणपुरुषोत्तम ।**
**इदं श्राद्धं हृषीकेश रक्षतां सर्वतोदिशः ।।१।।**
**पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे ।**
**प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे ।।२।।**
**ऐशान्यां रक्षतां विष्णुराग्नेय्यां च त्रिविक्रमः ।**
**नैरृत्यां पद्मनाभस्तु वायव्ये पातु माधवः ।।३।।**
**ऊर्ध्वं गोवर्द्धनो रक्षेदधस्ताच्च ह्यनन्तकः ।**

# आवाहनम्

**विधिनिरूपण**

सव्य जनैले तलका मन्त्र पढी जौ, फूल, चन्दन, विष्णु आदि देवतालाई चढाउनुपर्दछ। अपसव्यले दशौं र सोह्रौंलाई तिल, कुश, जल चढाउनुपर्दछ।

१. **विष्णोरावाहनम्**

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निर्दधे पदम् ।**
**समूढमस्य पाꣳसुरे स्वाहा ।।**
**भूर्भुवः स्वः विष्णो इहागच्छ इह तिष्ठ विष्णवे नमः, विष्णु-** मावाहयामि।

२. **शिवस्यावाहनम्**

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।**
शिव इहागच्छ इह तिष्ठ शिवाय नमः, शिवमावाहयामि ।

३. **यमस्यावाहनम्**

**ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु ।**

**पृथिव्याः सᳬस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोऽसि ।।**

यम इहागच्छ इह तिष्ठ यमाय नमः, यममावाहयामि ।

**४. सोमराजस्यावाहनम्**

**ॐ इमं देवा असपत्नᳬसुवध्वं महते क्षत्राय महते ज्यैष्ठ्यांय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यैं पुत्रमस्यै विश ऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳬराजा ।।**

सोमराज इहागच्छ इह तिष्ठ सोमाय नमः, सोमराजमावाहयामि ।

**५. हव्यवाहस्यावाहनम्**

**ॐ अग्निं दूतं पुरो दधे हव्यवाहुमुप ब्रुवे ।। देवा २।। ऽआसादयादिह।।**

हव्यवाह इहागच्छ इह तिष्ठ हव्यवाहाय नमः, हव्यवाहमावाहयामि।

**६. कव्यवाहस्यावाहनम्**

**ॐ अग्निं दूतं पुरो दधे हव्यवाहुमुप ब्रुवे ।। देवा २।। ऽआसादयादिह।।**

कव्यवाह इहागच्छ इह तिष्ठ कव्यवाहाय नमः, कव्यवाहमावाहयामि।

**७. कालस्यावाहनम्**

**ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या ऽउन्नयामि । समार्पोऽआद्भिरग्मत समोषधीभिरोषधीः।।**

काल इहागच्छ इह तिष्ठ कालाय नमः, कालमावाहयामि ।

८. **रुद्रस्यावाहनम्**

**ॐ त्र्यंम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ।।**

रुद्र इहागच्छ इह तिष्ठ रुद्राय नमः, रुद्रमावाहयामि ।

९. **पुरुषस्यावाहनम्**

**ॐ पुरुष ऽएवेदꣳसर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।**

पुरुष इहागच्छ इह तिष्ठ पुरुषाय नमः, पुरुषमावाहयामि ।

१०. **प्रेतस्यावाहनम्**

अपसव्येन - तिलजलपुष्पचन्दनमादाय

**ॐ प्रेता जयता नर ऽइन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ।।**

प्रेत इहागच्छ इह तिष्ठ प्रेतविप्राय नमः प्रेतमावाहयामि।

११. **विष्णोरावाहनम्**

**ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा ।।**

विष्णो इहागच्छ इह तिष्ठ विष्णवे नमः, विष्णुमावाहयामि ।

**१२ ब्राह्मण आवाहनम्**

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः।।**

ब्रह्मन् इहागच्छ इह तिष्ठ ब्रह्मणे नमः, ब्रह्माणमावाहयामि ।

**१३. विष्णोरावाहनम्**

**ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा ।।**

विष्णो इहागच्छ इह तिष्ठ विष्णवे नमः, विष्णुमावाहयामि ।

**१४. शिवस्यावाहनम्**

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः।।**

शिव इहागच्छ इह तिष्ठ शिवाय नमः, शिवमावाहयामि ।

**१५. यमस्यावाहनम्**

**ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु ।**

**पृथिव्याः सᳫँस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोऽसि ।।**

यम इहागच्छ इह तिष्ठ यमाय नमः, यममावाहयामि ।

**१६. तत्पुरुषस्यावाहनम्**

**ॐ प्रेता जयता नर ऽइन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ।।**

तत्पुरुष इहागच्छ इह तिष्ठ तत्पुरुषाय नमः, तत्पुरुषं निमन्त्रयामि ।

**आसन र हस्तार्घको विधिनिरूपण**

सव्य भएर विष्णुदेखि यमसम्म १४ देवब्राह्मणलाई ३ टुक्रा कुश, जौ र जल लिएर वचनपूर्वक आसन अर्पण गर्नुपर्दछ । अपसव्य भएर प्रेत र तत्पुरुषलाई वचनपूर्वक कुश, तिल र जल हातमा लिएर आसन दिनुपर्दछ। यसै गरी सव्य भएर विष्णु आदि देवब्राह्मणका अगाडि दुनामा पवित्र राखेर शन्नोदेवी० इत्यादि मन्त्र पढी जल, जौ, चन्दन, फूल आदि राखी हस्तार्घ बनाउनुपर्दछ । अपसव्य भएर विना मन्त्र जल, तिल कुश, अक्षता र फूल राखी प्रेत र तत्पुरुषको निम्ति हस्तार्घ बनाउनुपर्दछ । हस्तार्घ दिंदा पनि विष्णु आदिलाई सव्य र प्रेत एवं तत्पुरुषलाई अपसव्य भएर दिनुपर्दछ।

**आसनसमर्पणम्**

***कुशत्रययवजलमादाय-*** ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य मध्यमषोडशीश्राद्धे विष्णो इदमासनन्ते

नमः ॥१॥ ॐ यवोऽसीति यवान्प्रक्षिपेत् । एवं शिव इदमासनन्ते नमः ॥२॥ ॐ सपरिवार यम इदमासनन्ते नमः ॥३॥ ॐ सोमराज इदमासनन्ते नमः॥४॥ ॐ हव्यवाह इदमासनन्ते नमः॥५॥ ॐ कव्यवाह इदमासनन्ते नमः ॥६॥ ॐ काल इदमासनन्ते नमः ॥७॥ ॐ रुद्र इदमासनन्ते नमः ॥८॥ ॐ पुरुष इदमासनन्ते नमः॥९॥

***अपसव्येन तिलकुशत्रयमादाय-*** ॐ अद्यामुकगोत्रामुकप्रेत मध्यमषोडशीश्राद्धान्तर्गतश्राद्धे एतत्कुशासनन्ते मया दीयते तवो पतिष्ठताम् ॥१०॥ सव्येन हस्तं प्रक्षाल्य आचम्य पुनः कुशत्रयमादाय ॐ विष्णो इदमासनन्ते नमः॥११॥ ॐ ब्रह्मन् इदमासनन्ते नमः॥१२॥ ॐ विष्णो इदमासनन्ते नमः॥१३॥ ॐ शिव इदमासनन्ते नमः॥१४॥ ॐ यम इदमासनन्ते नमः॥१५॥

***अपसव्येन सतिलकुशत्रयमादाय-*** **ॐ अद्यामुकगोत्रामुकप्रेतमध्यमषोडशी- श्राद्धे तत्पुरुष इदं कुशासनन्ते मया दीयते तवो पतिष्ठताम्** । इति प्रेतब्राह्मणाय कुशासनं दद्यात्।

**हस्तार्घदानम्**

***सव्येन आचम्य*** - हस्तार्घार्थं सव्यापसव्येन देवानामग्रे स्थापितेषु नवसु पुटकेषु दक्षिणाग्रपवित्राणि धृत्वा दशमपुटके अपसव्येन पवित्रं धृत्वा पुनः सव्येन पञ्चसु पुटकेषु पवित्रं निधाय अपसव्येन

षोडशके पुटके पवित्रं धृत्वा सव्येन नवसु पुटकेषु **ॐ शन्नोदेवीरिति** जलम्, **यवोसीति** यवान्, **गन्धद्वारामिति** गन्धम्, **श्रीश्चते** इति पुष्पाणि प्रक्षिपेत् ।

अपसव्येन दशमपुटके (प्रेतपात्रे) जलतिलदर्भगन्धाक्षतपुष्पाणि तूष्णीं क्षिपेत् । पुनः सव्येन पञ्चसु पुटकेषु, अपसव्येन षोडशके पुटके जलगन्धादीनि क्षिपेत् । सव्येन हस्तार्घपात्रं वामहस्ते कृत्वा पवित्रं पूर्वाग्रं देवकरे धृत्वा दक्षिणकरेण आच्छाद्य **ॐ यादिव्याआपः पयसासंबभूवुर्याअन्तरिक्षा उतपार्थिवीर्याः । हिरण्यवर्णायज्ञियास्तानआपः- शिवाः सᳬं** स्योनाः सुहवाभवन्तु इत्यभिमन्त्र्य कुशयवजलान्यादाय- **ॐ अद्यामुकगोत्रस्याऽमुकप्रेतस्य प्रेतत्व निवृत्त्युत्तमलोकप्राप्त्यर्थं क्रियमाणमध्यमषोडशीश्राद्धे विष्णो एष हस्तार्घस्ते नमः।** इति पवित्रोपरि अर्घं दद्यात् । अर्घे पुनः प्रत्यर्घमस्तु पवित्रसहितं तदर्घपात्रं भोजनपात्रस्य दक्षिणपार्श्वे उत्तानमेव धारयेत् ॥१॥ एवं सर्वत्र विधेयम् । शिवादिभ्योपि देयम् । ॐ शिव एष हस्तार्घस्ते नमः ॥२॥ ॐ सपरिवारयमाय एष हस्तार्घस्ते नमः ॥३॥ ॐ सोमराज एष हस्तार्घस्ते नमः॥४॥ ॐ हव्यवाह एष हस्तार्घस्ते नमः॥५॥ ॐ कव्यवाह एष हस्तार्घस्ते नमः॥६॥ ॐ काल एष हस्तार्घस्ते नमः॥७॥ ॐ रुद्र एष हस्तार्घस्ते नमः॥८॥ ॐ पुरुष एष हस्तार्घस्ते नमः॥९॥

*अपसव्येन दशमप्रेतहस्तार्घपात्रमादाय-* **ॐ अद्यामुकगोत्रामुक- प्रेत ! प्रेतत्वनिवृत्तये क्रियमाणमध्यमषोडशीश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् ।** इति प्रेतब्राह्मणकरे अर्घ दद्यात् ॥१०॥ सव्येन आचम्य हस्तार्घमादाय पूर्ववत्कृत्वा- ॐ विष्णो एष हस्तार्घस्ते नमः॥११॥ ॐ ब्रह्मन् एष हस्तार्घस्ते नमः ॥१२॥ ॐ विष्णो एष हस्तार्घस्ते नमः॥१३॥ ॐ शिव एष हस्तार्घस्ते नमः ॥१४॥ ॐ यम एष हस्तार्घस्ते नमः॥१५॥

***अपसव्येन*** **- अद्यामुकगोत्रामुकप्रेतस्य मध्यमषोडशीश्राद्धे तत्पुरुष एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् ।** इति प्रेतब्राह्मणाय हस्तार्घं दद्यात् ॥१६॥ सव्येन शिवादिहस्तार्घपात्राणि शिवाय स्थानमसीति तत्तद्दक्षिणपार्श्वे उत्तानमेव स्थापयेत् । अपसव्येन प्रेतासनवामपार्श्वे प्रेताय स्थानमसीति उत्तानमेव स्थापयेत् तदुपरि कुशान् दद्यात् ।

***ब्राह्मणपूजनको विधिनिरूपण***

सव्य भएर कुश, जौ र जललिएर विष्णुदेखि यमसम्मका देवताहरूलाई वचन पढेर चन्दन, अक्षता, फूल जनै वस्त्र आदि अर्पण गर्नुपर्दछ । अपसव्य भएर प्रेत र तत्पुरुषलाई वचन पढेर चन्दन, अक्षता, फूल, जनै वस्त्र आदि समर्पण गर्नुपर्दछ ।

***ब्राह्मणपूजनम्***

ततः सव्येन विष्ण्वादियमपर्यन्तदेवेभ्यो गन्धाक्षतपुष्पयज्ञोपवीत वस्त्रद्रव्याणि दत्त्वा धूपदीपनैवेद्यानि

कुर्यात् ।

*कुशयवजलान्यादाय*- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्तये क्रियमाणमध्यम-षोडशीश्राद्धे एतानि गन्धाक्षतपुष्पधूप दीपनैवेद्यताम्बूल- यज्ञोपवीतद्रव्यवासांसि वो नमः।**

अपसव्येन प्रेत ब्राह्मणं गन्धादिभिरभ्यर्च्य धूपदीपौ च कारयेत् । कुशादिकमादाय- **ॐ अद्यामुकगोत्रामुकप्रेतस्य मध्यमषोडशीश्राद्धे विप्रार्चनविधौ इमानि गन्धादीनि यथाशक्त्युपकल्पितानि युवाभ्यां मया दीयन्ते युवयोरुपतिष्ठन्ताम्** । इति विप्रनिकटे उत्सृजेत् ।

सव्येन विष्वादिदेवेभ्यः क्रमेण जलगन्धादिकं देयम् । अपसव्येन प्रेतब्राह्मणाभ्यां जलगन्धादिकं देयम् ।

***भूस्वामी अन्नदानको विधिनिरूपण***

प्रेतको भोजनपात्र अगाडि - **यथा चक्रायुधो०** पढेर चतुष्कोण मण्डल बनाउने, अपसव्य भएर वचन पढ्दै भूस्वामी गर्नुपर्दछ ।

***भूस्वामिने अन्नदानम्***

*प्रेतभोजनपात्रस्याग्रतः*- **यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ।**
**एवं मण्डलभस्मैतत् सर्वभूतानि रक्षतु ।।**

इति चतुष्कोणमण्डलं कुर्यात् । अपसव्येन तिलजलघृतमधुयुतमन्नं कुशसहितमादाय पूर्वसङ्कल्पमुच्चार्य - **ॐ इदमन्नं सजलं तिलघृतमधुयुतमेतद्भूस्वामिपितृभ्यो नमः** इत्युत्सृजेत्।

***अन्नदानको विधिनिरूपण***

सव्य भएर सबै सामग्रीयुक्त सीधामा तीनपटक मधु ३ पढेर मह छर्कनुपर्दछ। दुवै हातका हत्केला घोप्टो पारी बायाँ नाडीमाथि दाहिने नाडी राखी सीधा ढाकेर पृथिवीते पात्रं० विष्णो हव्यमिदं० पढ्नुपर्दछ । सीधाका वरिपरि **यवोऽसि०** पढेर जौ छर्की वचनपूर्वक १ देखि ९ सम्मका ९ सीधा दिनुपर्दछ ।

***अन्नदानसङ्कल्पः***

सव्येन सोपस्करजलयुतमन्नमुपनीय अन्नोपरि मधु दत्त्वा **ॐ मधु मधु मधु** इति त्रिर्जपित्वा उत्तानपाणिभ्यां प्रथमापन्नपात्रमालभ्य- **ॐ पृथिवीतेपात्रंद्यौरपिधानं ब्राह्मणस्यमुखेअमृतेऽ - अमृतंजुहोमिस्वाहा ।। इदं विष्णुः** इति **विष्णोहव्यमिदं रक्ष मदीयमिति** च पठित्वा वामेन पात्रमत्यजन् दक्षिणहस्ताङ्गुष्ठमन्नजलघृतादिषु निवेश्य- **ॐ यवोसीति** परितो यवान्विकीर्य दक्षिणहस्तेन कुशादिकमादाय - **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्व विमुक्त्युत्तमलोकप्राप्तये क्रियमाणमध्यम षोडशीश्राद्धे एतदन्नं सोपस्करममृतरूपं हव्यं विष्णवे स्वाहा संपद्यतां न मम।**

इत्युत्सृजेत् ॥१॥ एवं शिवाय ॥२॥ यमाय सपरिवाराय ॥३॥ सोमराजाय ॥४॥ हव्यवाहाय॥५॥ कव्यवाहाय ॥६॥ कालाय ॥७॥ रुद्राय ॥८॥ पुरुषाय च ॥९॥ दद्यात् ।

***प्रेतार्थ अन्नदानको विधिनिरूपण***

अपसव्य भएर प्रेतको सीधा वरिपरि तिल छर्की तिल, कुश, जल लिएर सीधा सङ्कल्प गर्नुपर्दछ ।

***प्रेतायान्नदानसङ्कल्पः***

अपसव्येन तिलान् विकीर्य दशमप्रेतान्नपात्रमालभ्य कुशतिलजलान्यादाय- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य क्रियमाणमध्यम षोडशीश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्** । इत्युत्सृजेत् ॥१०॥

***विष्णु आदि देवब्राह्मणका निमित्त अन्नदानको विधिनिरूपण***

सव्य भएर विष्णुदेखि यमसम्मका ११ देखि १५ सम्मका देवब्राह्मणलाई सीधा सङ्कल्प गर्नुपर्दछ ।

***विष्णवादियमपर्यन्तेभ्योऽन्नदानम्***

ततः सव्येन- विष्णवे ॥११॥ ब्रह्मणे ॥१२॥ विष्णवे ॥१३॥ शिवाय ॥१४॥

यमाय ॥१५॥ च दद्यात् ।

*तत्पुरुषार्थ अन्नदानको विधिनिरूपण*

अपसव्य भएर तत्पुरुषको सीधा वरिपरि तिल छर्की तिल, कुश, जल लिएर सीधा सङ्कल्प गर्नुपर्दछ ।

*तत्पुरुषायान्नदानम्*

अपसव्येन वामावर्तेन तिलान्विकीर्य कुशतिलजलान्यादाय- **ॐ अद्यामुक गोत्रामुकप्रेतस्य क्रियमाणमध्यमषोडशीश्राद्धे तत्पुरुषाय इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्।** इत्युत्सृजेत् ॥१६॥

*वेदिकानिर्माण, अवनेजन र पिण्डदानसम्बन्धी विधिनिरूपण*

सव्य भएर विष्णु आदि ब्राह्मणको हातमा र अपसव्य भएर प्रेत ब्राह्मणको हातमा जल दिनुपर्दछ । सव्य भएर चौधवटा पिण्डवेदी र अपसव्य भएर दुईवटा प्रेत र तत्पुरुषका निमित्त पिण्डवेदी बनाउनुपर्दछ । सव्य भएर विष्णु आदिका १४ वेदीमा अवनेजन दिई अपसव्य भएर प्रेत र तत्पुरुषवेदीमा अवनेजन दिनुपर्दछ । यही क्रमले सव्य भएर देवब्राह्मणका लागि पिण्ड बनाई अपसव्य भएर प्रेत र तत्पुरुषका लागि पिण्ड बनाएर पिण्ड र प्रत्यवनेजन दिने काम

गर्नुपर्दछ ।

**विशेष-** पिण्ड बनाउँदा बेलका दाना बराबर बाटुला बनाई तिनमा तिल, घिउ र मह मिलाउनु पर्छ।

***विष्ण्वादिभ्यो जलार्पणं पिण्डवेदिकानिर्माणादिकञ्च***

***जलार्पणम्*** -सव्येनाचम्य **अन्नसङ्कल्पसिद्धिरस्तु** इति विष्ण्वादिदेवकरे जलं दत्त्वा अपसव्येन प्रेतब्राह्मणकरयोर्जलं देयम् ।

***प्रार्थनादिकम्*** - सव्येन मधुवाता इति ऋचं **मधु मधु मधु** इति च पठेत्।

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**
**तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः।।**
**नमस्तुभ्यं विरुपाक्ष नमस्तेऽनेकचक्षुषे ।**
**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः।।** इति पठेत् ।
**अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका ।**
**पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः।।**

इति स्मृत्वा सव्येन चतुर्दशवेदिकाः, अपसव्येन वेदिकाद्वयञ्च कुर्यात् । सव्यापसव्याभ्यां

पिण्डिकासेचनं जलेन कुर्यात् ।

***अवनेजनम्*** - तदनु सव्यापसव्याभ्यां षोडशवेदिकायां छिन्नमूलकुशानास्तीर्य सव्येन नवसु पुटकेषु कुशजलयवगन्धपुष्पाणि क्षिप्त्वा सकुशोदकेन प्रथमावनेजनपात्रमादाय- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य मध्यम षोडशीश्राद्धे विष्णुपिण्डस्थानेऽत्रावनेनिक्ष्व ते नमः** इति प्रथमदर्भोपरि अवनेजनं दद्यात् ॥१॥ एवं प्रकारेण शिवाय ॥२॥ सपरिवाराय यमाय ॥३॥ सोमराजाय॥४॥ हव्यवाहाय ॥५॥ कव्यवाहाय ॥६॥ कालाय ॥७॥ रुद्राय ॥८॥ पुरुषाय च ॥९॥ दद्यात् ।

***अपसव्येन कुशतिलजलान्यादाय***- **ॐ अद्यामुकगोत्रस्यामुक प्रेतस्य मध्यमषोडशीश्राद्धे इदमवनेजनन्ते मया दीयते तवोपतिष्ठताम्** ।इति दशमदर्भोपरि दद्यात् ॥१०॥

ततः सव्येन विष्णुब्रह्मविष्णुशिवयमेभ्योऽवनेजनं दद्यात् ॥११॥ ॥१५॥

अपसव्येन कुशतिलजलान्यादाय तत्पुरुषाय अवनेजनं दातुं सङ्कल्पं कुर्यात् - **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य मध्यमषोडशीश्राद्धे तत्पुरुषपिण्डस्थाने ऽत्रावनेनिक्ष्व ते मया दीयते तवोपतिष्ठताम्** । इति तत्पुरुषदर्भोपरि दद्यात् ॥१६॥

***पिण्डदानम्*** -ततः सव्येन तिलघृतमधुयुतविल्वप्रमाणान् सुवर्तुलान् षोडश पिण्डान्निर्माय

सव्येनैव कुशयवजलयुतं प्रथमपिण्डं वामहस्ते पुटकादिस्थजलमादाय- **ॐ अद्यामुकगोत्रस्यामुक-प्रेतस्य प्रेतत्वनिवारणार्थं क्रियमाणमध्यमषोडशीश्राद्धे विष्णो एष पिण्डस्ते नमः।** इति प्रथमावनेजनोपरि दद्यात् ।।१।। एवंरीत्या शिवाय ।।२।। यमाय सपरिवाराय ।।३।। सोमाय ।।४।। हव्यवाहाय ।।५।। कव्यवाहाय ।।६।। कालाय ।।७।। रुद्राय ।।८।। पुरुषाय च ।।९।। दद्यात् ।

***अपसव्येन कुशतिलजलयुतं दशमं पिण्डमादाय*** - **ॐ अद्यामुकगोत्रा- मुकप्रेतस्य एकादशाहे क्रियमाणमध्यमषोडशीश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** इति अवनेजनोपरि पिण्डं दद्यात् ।।१०।।

पुनः सव्येन आचम्य- विष्णवे ।।११।। ब्रह्मणे ।।१२।। विष्णवे ।।१३।। शिवाय ।।१४।। यमाय ।।१५।। पिण्डान् दद्यात् ।

***पुनः अपसव्येन कुशतिलजलसहितं पिण्डमादाय*- अद्यामुकगोत्रामुक- एकादशाहे क्रियमाणमध्यमषोडशीश्राद्धे तत्पुरुष एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इत्यवनेजनोपरि पिण्डं दद्यात् ।।१६।।

***प्रत्यवनेजनम्*** - सव्येन प्रत्यवनेजनपात्रमादाय- **ॐ अद्यामुकगोत्र- स्यामुकप्रेतस्य मध्यमषोडशीश्राद्धे विष्णो इदं पिण्डप्रत्यवनेजनन्ते नमः।।१।।** एवं शिवपिण्डे ।।२।।

सपरिवारयमपिण्डे ॥३॥ सोमराजपिण्डे ॥४॥ हव्यवाहपिण्डे ॥५॥ कव्यवाहपिण्डे ॥६॥ कालपिण्डे ॥७॥ रुद्रपिण्डे ॥८॥ पुरुषपिण्डे च ॥९॥ दद्यात् ।

*अपसव्येन प्रत्यवनेजनपात्रमादाय-* **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य मध्यमषोडशीश्राद्धे प्रेत इदं पिण्डप्रत्यवनेजनन्ते नमः।** इति प्रेतपिण्डे दद्यात् ॥१०॥

एवमेव सव्येन विष्णुपिण्डे ॥११॥ ब्रह्मपिण्डे ॥१२॥ विष्णुपिण्डे ॥१३॥ शिवपिण्डे ॥१४॥ यमपिण्डे ॥१५॥ प्रत्यवनेजनं दद्यात् ।

*अपसव्येन कुशतिलजलमादाय* - **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य क्रियमाणमध्यमषोडशीश्राद्धे तत्पुरुष इदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इति प्रत्यवनेजनं दद्यात् ॥१६॥

***पिण्डार्चनसम्बन्धी विधिनिरूपण***

सव्य भएर विष्णु आदिका पिण्डमा धागो राखी पिण्डपूजा र धूपबत्ती गर्नुपर्दछ। अपसव्य भएर प्रेत र तत्पुरुषको पिण्डमा धागो राखी पिण्डपूजा र धूपबत्ती गर्नुपर्दछ ।

***पिण्डाऽर्चनादिकम्***

***सूत्रार्पणम्*** - सव्येन वामेन पाणिना धृतं सूत्रं दक्षिणेनादाय विष्णुपिण्डे **एतद्वासस्ते नमः** इति दद्यात् । एवं शिवादियमपर्यन्तपिण्डेषु सूत्रं दद्यात् ।

*ततोऽपसव्येन* -**ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य क्रियमाणमध्यमषोडशी श्राद्धे प्रेततत्पुरुष-पिण्डयोरेतेवाससी युवाभ्यां मया दीयेते युवयोरुपपतिष्ठेताम्** । इति दद्यात् ।

***पिण्डार्चनम्*** - सव्येन विष्णुशिवादिचतुर्दशपिण्डान् गन्धाक्षतपुष्पवस्त्रद्रव्ययज्ञोपवीतताम्बूला- दिभिः संपूज्य धूपदीपौ च कारयेत् । कुशादिकमादाय- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्व निवृत्तये एकादशाहे क्रियमाणमध्यमषोडशीश्राद्धे विष्णोः पिण्डार्चनविधौ इमानि यथो-पकल्पितानि मद्दत्तानि गन्धादीनि युवाभ्यामुपतिष्ठन्ताम्** । इत्युत्सृजेत् । एवं शिवादिभ्योऽपि देयम् ।

ततोऽपसव्येन प्रेततत्पुरुषपिण्डद्वयं गन्धादिभिरभ्यर्च्य धूपदीपौ च कृत्वा कुशादिकमादाय - **ॐ अद्यामुकगोत्रामुकप्रेतस्य क्रियमाणमध्यमषोडशीश्राद्धे प्रेततत्पुरुषयोः पिण्डाऽर्चनविधौ इमानि यथोप कल्पितानि मद्दत्तानि गन्धादीनि ते संपद्यन्तां नमः** । इत्युत्सृजेत् ।

**सव्येन पिण्डार्चन विधेः परिपूर्णतास्तु** इति देवब्राह्मणकरेषु जलं दद्यात् । अपसव्येन प्रेतब्राह्मणकरयोर्जलं देयम् । सव्येन पिण्डशेषान्नं विष्णुशिवादि- पिण्डसमीपे विकिरेत् । अपसव्येन प्रेतपिण्डसमीपे विकिरेत् ।

ततः **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य सद्गतिरुत्तमलोकप्राप्तिश्च भवतु** इति पठित्वा सव्येन आचम्य देवान्नपात्रेषु **शिवा आपः सन्तु** इति जलम्, **सौमनस्यमस्तु** इति पुष्पम्, **अक्षतञ्चारिष्टमस्तु** इति तण्डुलान्क्रमेण दद्यात्। अपसव्येन प्रेतान्नपात्रयोः सुप्रेक्षितादि कुर्यात् ।

***अक्षयोदक, जलाञ्जलि, दक्षिणासम्बन्धी विधिनिरूपण***

विष्णु आदिलाई सव्य र प्रेत एवं तत्पुरुषलाई अपसव्य भएर अक्षयोदक दिनुपर्दछ । अपसव्य भएर प्रेतपिण्डमा दूध दिनुपर्दछ । सव्य भएर विष्णु आदिका पिण्डमा तिल, जौ, दूध, सर्वौषधि, तुलसीपत्र र सुन मिसिएको जलले वचनपूर्वक अञ्जलि दिएर अपसव्य भएर प्रेत र तत्पुरुषको पिण्डमा जलाञ्जलि दिनुपर्दछ । त्यसपछि सव्य भएर सोह्रवटै पिण्ड सुँघेर चौधवटा पिण्ड सव्य भएर उठाउनुपर्दछ । प्रेत र तत्पुरुषका पिण्ड अपसव्य भएर उठाई पिण्डमुनिका कुशहरू अग्निमा राख्नुपर्दछ । पिण्डहरू वेदीमा राखी देवताका अर्घपात्रहरू सव्य भएर र प्रेतका अर्घपात्र अपसव्य भएर संचालन गर्नुपर्दछ । त्यसपछि सव्य भएर आचमन गरी दक्षिणाको पूजा गरेपछि दक्षिणासंकल्प गर्नुपर्दछ । दक्षिणासङ्कल्प गरिसकेपछि भूयसी दक्षिणा गरी **देवताभ्यः ०** आदि मन्त्र पढेर समापन गर्नुपर्दछ ।

### अक्षयोदकादिदानानि

***अक्षोदकदानम्*** **-** ततः सव्येन - पुटकादौ कुशयवजलान्यादाय- **ॐ अद्यामुकगोत्रस्यामुक-प्रेतस्योत्तमलोकावाप्तये विहितमध्यमषोडशीश्राद्धे विष्णोर्दत्तैतदन्नपानादिकमक्षप्यमस्तु ते नमः।** इत्यक्षयोदकं दद्यात् । एवं शिव-यम-सोमराज-हव्यवाह-कव्यवाह-काल-रुद्रपुरुषाणां षष्ठ्या विभक्त्या क्रमेण अक्षयोदकं दद्यात् ।

*ततोऽपसव्येन पुटके कुशतिलजलान्यादाय*-**ॐ अद्यामुकगोत्रस्यामुक प्रेतस्य मध्यमषोडशीश्राद्धे प्रेतस्य दत्तैतदन्नपानादिकमक्षयमुपतिष्ठताम्।** इति अक्षयोदकं देयम् ।

पुन: विष्णु - ब्रह्म-विष्णु-शिव- यमानामक्षयोदकं दद्यात् ।

पुन: अपसव्येन- **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य मध्यमषोडशीश्राद्धे तत्पुरुषस्य दत्तैतदन्नपानादिकमक्षयमुपतिष्ठताम्** इत्यक्षयोदकं दद्यात् ।

सव्येन **अघोर: प्रेतोस्तु** इति (प्रेता स्त्री चेत् - **अघोरा प्रेता अस्तु** इति वदेत् ।) दक्षिणां दिशं पश्यन् प्रेतपिण्डयो: पूर्वाग्रामेकामेकां जलधारां दद्यात्। अत्राशीर्वादप्रार्थनानिषेध:।

***दुग्धदानम्*** - तत: उर्ज्जवहन्तीरमृतमिति मन्त्रेण अपसव्येन प्रेतपिण्डयो: इदमूर्जन्युवाभ्यां मया दीयते युवयोरुपतिष्ठतामिति दद्यात् ।

## अञ्जलिदानम्

तत: सव्येन तिलयवदुग्धसर्वौषधितुलसीदलहिरण्यमिश्रितोदकमादाय-**ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य परलोकेमहातृषानिवारणार्थं विहितमध्यमषोडशी श्राद्धे पिण्डोपरि एकैकमन्त्रेण द्विर्द्विरञ्जलिदानमहं करिष्ये।** इत्यञ्जलिदान प्रतिज्ञासङ्कल्पं कुर्यात् । ततोऽधस्तनमन्त्रं पठेत् - **ॐ अपोदेवा मधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चिताना: ।। याभिर्मित्रावरूणावभ्यषिञ्चन्याभिरिन्द्रमन- यन्नत्परातीः** ।। इति पठित्वा तिलयवदुग्धसर्वौषधितुलसीदलहिरण्य-मिश्रितोदकेन- **ॐ अद्यामुकगोत्रस्यऽमुकप्रेतस्य विहितैकादशाहे मध्यमषोडशीश्राद्धे प्रथमे विष्णुपिण्डे**

**जलन्ते नमः**। इति द्वावञ्जली दद्यात् । ॐ. इषेत्वा इषेत्वोर्ज्जेत्वा वायवस्थ देवो वः सविता प्रापयतुश्रेष्ठ तमाय कर्मणऽ आप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा वस्तेनऽईशत माघशसो ध्रुवाऽअस्मिन गोपतौ स्यात वह्वीर्यजमानस्य पशून् पाहि ॥१॥

एवं पूर्वोक्तप्रकारेण **द्वितीये शिवपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम् । उरुष्य राय यजस्व ॥२॥

एवमेव **तृतीये सपरिवारयमपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् सपरिवारयमपिण्डे जलाञ्जलिं दद्यात् । **ॐ येना पावक चक्षसा भुरण्यन्तं जनाँ २।। ऽअनु। त्वं वरूण पश्यसि ।।३।।**

एवमेव **चतुर्थे सोमराजपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् हव्यवाहपिण्डे जलाञ्जलिं दद्यात् । ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥४॥

एवमेव **पञ्चमे हव्यवाहपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहा

मित्रावरुणौ मच्छ स्वाहा होरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमै गच्छ स्वाहा दिव्य नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा । मनो मे हार्दि यच्छ दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा ॥५॥

एवमेव **षष्ठे कव्यवाहपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्य स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥६॥

एवमेव **सप्तमे कालपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हुविषा विधेम ॥७॥

एवमेव अष्टमे **रुद्रपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ इषेत्वा इषेत्वोर्ज्जेत्वा वायवस्थ देवो वः सविता प्रापयतुश्रेष्ठ तमाय कर्मणऽ आप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा वस्तेनऽईशत माघशसो ध्रुवाऽअस्मिन गोपतौ स्यात वह्वीर्यजमानस्य पशून् पाहि ॥८॥

एवमेव नवमे **पुरुषपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ यज्जाग्रतो दूरमुदैति दैव तदु सुप्तस्य तथैवेति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिव संङ्कल्पमस्तु ॥९॥

ततोऽपसव्येन - **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्व निवृत्तये उत्तमलोकावाप्तये एकादशाहे विहितमध्यमषोडशीश्राद्धे महातृषानिवारणार्थं दशमे प्रेतपिण्डे जलाञ्जलिस्ते उपतिष्ठताम् ।** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् द्वावञ्जली दद्यात् । ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्ता नो मुञ्चन्व त्वꣳ हसः॥१०॥

ततः सव्येन **एकादशे विष्णुपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरूत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव ऽएकः ॥११॥

एवमेव द्वादशे **ब्रह्मपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः॥१२॥

एवमेव **त्रयोदशे विष्णुपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन्

जलाञ्जलिं दद्यात् । ॐ इषेत्वा इषेत्वोर्ज्जेत्वा वायवस्थ देवो वः सविता प्रापयतुश्रेष्ठ तमाय कर्मणऽ आप्यायध्वं मघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा वस्तेनऽईशत माघश ँ सोध्रुवाऽअस्मिन गोपतौ स्यात वह्वीर्यजमानस्य पशून् पाहि ॥१३॥

एवमेव **चतुर्दशे शिवपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ नमस्ते रुद्र मन्यव ऽउतो त इषवे नमः। बाहुभ्यामुत ते नमः ॥१४॥

एवमेव **पञ्चदशे यमपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ शं नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शं योरभिस्त्रवन्तु नः॥१५॥

अपसव्येन - **ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य विहितमध्यम षोडशीश्राद्धे महातृषानिवारणार्थं षोडशे तत्पुरुषपिण्डे जलाञ्जलिस्ते नमः** इति सङ्कल्प्य अधस्तनमन्त्रं पठन् जलाञ्जलिं दद्यात् । ॐ प्रेता जयता नर ऽइन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥१६॥

ततः सव्येन तेनैवोदकेन - **ॐ अद्यामुकगोत्रामुकप्रेत ! परलोके महातृषानिवारणार्थं विहितमध्यमषोडशीश्राद्धे विष्ण्वादितत्पुरुषपर्यन्तषोडशपिण्डोपरि इदमुदकमुपतिष्ठतु** इति त्रिवारमेकवारं वा जलधारां दद्यात् ।

षोडश पिण्डान्सव्येन आघ्राय चतुर्दश सव्येनैवोत्थापयेत्, प्रेतपिण्डद्वयमपसव्येनोत्थापनीयम्। पिण्डाधारकुशान्वह्नौ क्षिपेत् । पिण्डा वेद्यां स्थापनीयाः।

***दक्षिणा***- देवार्घपात्राणि सव्येन प्रेतयोरपसव्येन सञ्चाल्य सव्यं कृत्वाचम्य दक्षिणासङ्कल्पं कुर्यात् । ततो देयद्रव्यमादाय पूजयित्वा - **ॐ तत्सत्पूर्वसङ्कल्पसिद्धिरस्तु अद्यामुकगोत्रस्यामुकप्रेतस्य एकादशाहे प्रेतत्व निवृत्तिपूर्वकोत्तमलोकप्राप्त्यर्थं विहित मध्यमषोडशीश्राद्धान्तर्गतविष्णुप्रभृतियमपर्यन्तप्रीतये यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमह मुत्सृजे** इति। पुनः प्रेतब्राह्मणद्वयोरपि सङ्कल्पपूर्वकं दक्षिणा देया । ततो भूयसीदक्षिणां सङ्कल्प्य दद्यात् ।

***प्रार्थना*** - **ततः देवताभ्यः पितृयश्च महायोगिभ्य एव च ।**
**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ।।**

इति त्रिर्जपेत् ।

**अनादिनिधनो देवः शङ्खचक्रगदाधरः ।**
**अक्षय्यः पुण्डरीकाक्ष ! प्रेतमोक्षप्रदो भव ।।१।।**

ततो दीपमाच्छाद्य हस्तौ पादौ प्रक्षाल्य आचम्य अस्मिन् मध्यम षोडशीश्राद्धे न्यूनातिरिक्तं

यत्कृतं तत्सुकृतमस्तु यन्नकृतं तद्विष्णोः प्रसादात् ब्राह्मणवचनात्सर्वं परिपूर्णमस्तु प्रेतस्य अक्षय्यतृप्तिः प्रेतत्वविमुक्तिश्च भवतु । इति प्रार्थयेत् । **ॐ भद्रं कर्णेभिरिति देवविसर्जनं कुर्यात्** ।ततः क्षमाप्रार्थनां कुर्यात् ।

**क्षमाप्रार्थना - प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।**
**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।।**
**यस्य स्मृत्या च नामोक्त्या तपः श्राद्धक्रियादिषु ।**
**न्यूनं सपूर्णतां याति सद्यो वन्दे तमच्युतम् ।।**
**अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।**
**ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ।।**

**ॐ विष्णावे नमः, ॐ अच्युताय नमः इति च वारत्रयं जपेत् इति।**

*इति मध्यमषोडशीश्राद्धविधि*

०००

# परिशिष्टम्

## १. प्रेतघटदानविधिः (प्रेतघडा दान)

### *विधिनिरूपण*

सुनको राम्रो प्रेत घडा बनाई त्यसमा ब्रह्मा, विष्णु, महेश्वर र लोकपालहरूको नाम लेखी दूध, घिउले भर्नुपर्दछ । घडाको माझमा ब्रह्मा, विष्णु, महेश्वरको स्थापना गरी **ब्रह्मयज्ञानम्०** यस मन्त्रले ब्रह्माजीको, **ॐ इदं विष्णु०** यस मन्त्रले भगवान् विष्णुको, **ॐ नमः शम्भवाय०** यस मन्त्रले भगवान् शङ्करको चन्दनाक्षता आदिले पूजा गर्नुपर्दछ । घडा वरिपरि पूर्वादि क्रमले पूर्वमा इन्द्र, दक्षिणमा यम, पश्चिममा वरुण उत्तरमा कुवेरहरूको तत्तन्मन्त्रले श्रद्धापूर्वक पूजा गरी ब्राह्मणको पनि पूजा गर्नुपर्दछ । त्यसपछि धूप, दीप, नैवेद्य गरी सङ्कल्पपूर्वक घडादान गरेर ब्राह्मणलाई दिनुपर्दछ । त्यसपछि प्रार्थना गरी दानप्रतिष्ठा र दक्षिणासमेत ब्राह्मणका हातमा दिनुपर्दछ।

***विधिः*** - मनोरमं सुवर्णमयं घटं विधाय घटमध्ये ब्रह्मविष्णुशिवानां नामानि तथा चतुर्दिक्षु चतुर्णां लोकपालानां नामानि पूर्वादितः क्रमेण इन्द्रयम वरुणकुवेराणां नामानि विलिख्य दुग्धाज्याभ्यां

घटं पूरयित्वा पूजयेत् ।

*ब्रह्मपूजनम्*

**ॐ ब्रह्मं जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा ऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः।। ॐ ब्रह्मणे नमः** चन्दनाक्षतपुष्पाणि समर्पयामि इति।

*विष्णुपूजनम्*

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥ **ॐ विष्णवे नमः** चन्दनाक्षतपुष्पाणि समर्पयामि इति।

*शङ्करपूजनम्*

नमः शम्भवाय च मयोभवाय च मनः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ **ॐ शङ्कराय नमः** इति गन्धपुष्पादिभिरर्चयेत् ।

*लोकपालपूजनम्*

**घटस्य पूर्वभागे - त्रातारमिन्द्र०** इति मन्त्रेण इन्द्रं गन्धादिभिः पूजयेत् ।

**यमायत्वा मखायत्वा** इति मन्त्रेण दक्षिणभागे यमं पूजयेत् ।

**पश्चिमभागे - वरुणस्य०** इति मन्त्रेण गन्धादिभिः वरुणमर्चयेत् ।

**उत्तरभागे - कुवेरं०** इति मन्त्रेण चन्दनादिभिः कुवेरमर्चयेत् ।

ततो देयब्राह्मणम् सम्पूज्य धूपदीपनैवेद्यादिकं कृत्वा दक्षिणाद्रव्यं समर्पयेत् । ततः कुशादिसहितकर्मपात्रोदकमादाय घटं स्पृष्ट्वा सङ्कल्पयेत् । **घटदानसङ्कल्पः- ॐ तत्सदिति पूर्वसङ्कल्पमुच्चार्य अद्य अमुकगोत्रस्य अस्मत्पितुः अमुकशर्मणो यममार्गे यमदूतजन्यकष्टनिवृत्ति पूर्वकं मोक्षलाभार्थमिमं क्षीराज्यपूर्णं सुवर्णघटमग्निदैवतं घृतं मृत्युञ्जयदैवतं यथानामगोत्राय शर्मणे ब्राह्मणाय सुपूजिताय दातु महमुत्सृजे तत्सन्न मम।** इत्युक्त्वा ब्राह्मणकरे कुशजलं दद्यात् । ग्रहीता स्वस्तीत्युक्त्वा गृह्णीयात् । ततः इदं विष्णुरित्यादिना प्रार्थनां कुर्यात् । ततो दानप्रतिष्ठां कृत्वा ब्राह्मणाय प्रतिपादयेत् । ब्राह्मणश्च कामस्तुतिं पठेत् ।

**कामस्तुतिः- सन्तप्तहाटकमयं तु घटं विधाय**
**ब्रह्मेशकेशवयुतं सहलोकपालैः ।**
**क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या**
**विप्राय देहि तव दानशतैः किमन्यैः ।।**

*-इति प्रेतघटदानविधिः-*

०००

# २. पददानविधिः

*विधिनिरूपण*

छाता, जुत्ता, वस्त्र, औंठी, कमण्डलु, आसन, पञ्चपात्र, तामाको थाली, लौरो, काँचो अन्न, पाकेको अन्न, द्रव्य, जनै आदि सामग्री जम्मा पारी कर्मपात्रका जलले सेचन गरी पूजा गर्नुपर्दछ । ब्राह्मणको पनि पूजा गरी पददानका सबै सामान छोएर सङ्कल्पपूर्वक ब्राह्मणलाई दिनुपर्दछ । ब्राह्मणको प्रार्थना गरी फूल अक्षता पददानका सामानमा राखी दिनुपर्दछ। त्यसपछि सङ्कल्पपूर्वक ब्राह्मणलाई दानप्रतिष्ठा दिनुपर्दछ ।

***पददानविधिः-*** **छत्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ।**
**आसनं पञ्चपात्राणि पदं पञ्चविधं स्मृतम् ।।**
**दण्डेन ताम्रपात्रेण ह्यामान्नैर्भोजनैरपि ।**
**अर्थयज्ञोपवीतैश्च पदं सम्पूर्णतां व्रजेत् ।।**
**त्रयोदशपदानीत्थं यथाशक्त्या विधाय च ।**
**त्रयोदशभ्यो विप्रेभ्यः प्रदद्याद् द्वादशेऽहनि ।।**

अशक्तौ त्रीणि पदानि देयानि तत्राप्यशक्तौ एकमवश्यं देयम् ।

***पददानवस्तुपूजनम्*** - कर्मपात्रं विधाय तत्रस्थजलेन देयवस्तूनि अभिषिच्य चन्दनाक्षत पुष्पादिभिः- **ॐ पददानीय छत्रादिसकलवस्तुभ्यो नमः** इति पूजनं कुर्यात् । ततो ब्राह्मणपूजनं कुर्यादधस्तनमन्त्रेण-

**नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**
**जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।।**

**ब्राह्मणाय नमः** इति।

*पददानसङ्कल्पः* - **हरि ॐ तत्सदिति पूर्वसङ्कल्पमुच्चार्य अद्येह अमुकगोत्रस्य अस्मत्पितुः (मातुः, भ्रातुरित्यादि) अमुकशर्मणः (अमुकवर्मणः, अमुकगुप्तस्य, अमुकदासस्येति वा) यममार्गे रौद्रातपादिजन्यदुःखनिवारणार्थं पददानार्थमिदं छत्रमुत्तानाङ्गिरोदैवतं सन्तप्त-वालुकासिकण्टकादिजन्य- कष्टपरिहारार्थं पददानान्तर्गत इमे उपानहौ उत्तानाङ्गिरोदैवते, वस्त्रं बृहस्पतिदैवतं स्वर्णमुद्रिकां वह्नि दैवतां सुमधुरं जलं कमण्डलु च वरूणविश्वकर्मदैवते पञ्चपात्रं विश्वकर्मदैवतं यष्टिरन्नमासनं यज्ञोपवीतं द्रव्यं व्यञ्जनमित्यादि यद्वस्तु तत्तद्दैवतम्,**

**अमुकगोत्राय अमुकशर्मणे सुपूजिताय विप्राय पददानत्वेन तुभ्यमहं सम्प्रददे तत्सन्न मम।**
इत्यभिधाय ब्राह्मणाय दद्यात् । ततो ब्राह्मणप्रार्थनां कुर्यात् ।

***ब्राह्मणप्रार्थना*** - **ॐ सर्वेषामेव दानानां छत्रमातपवारणम् ।**
**सुखदं मोक्षदं यस्मादतः शान्तिं प्रयच्छ मे ।।**
**उपानहौ प्रदास्यामि कण्टकादिनिवारणे ।**
**सर्वत्र सुखदे नित्यमतः शान्तिं प्रयच्छ मे ।।**
**यतिभ्यो वैष्णवं दण्डं द्विजेभ्यो हि खनित्रयम् ।**
**प्रदाय परलोकेऽसौ यमदण्डं न गच्छति ।** इति ।

***दानप्रतिष्ठा:*** - ततः पददानस्य सिद्ध्यर्थं दानप्रतिष्ठात्वेन द्रव्यं सङ्कल्प्य ब्राह्मणाय दद्यात् - ॐ अद्यकृतैतदस्थानीयछत्रादिवस्तुदानकर्मणः न्यूनातिरिक्तं पूरणार्थमिदं यद् द्रव्यं तद्दैवताकं पूर्वोक्तशर्मणे ब्राह्मणाय पददानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे तत्सन्न मम ।।

***-इति पददानविधिः-***

० ० ०

# ३ - अश्वदानविधिः (घोडा-दान)

***विधिनिरूपण***

अश्व (घोडा) मिलेसम्म सेतो उत्तम हुन्छ । दोषले रहित युवा र निरोग हुनुपर्छ । कलियुगमा अश्वमेधयज्ञ गर्न अशक्य हुनाले त्यसको सट्टा अश्वदान गर्नुपर्दछ । वज्रका आँखा, तामाका खुर, उनको पुच्छर, पटवस्त्रले ढाकी धान्य र रत्नमाथि राखी काठी र लगामसहित पुण्यकालमा (अथवा) मृतकको एकादशाहमा ब्राह्मणको र अश्वको वस्त्र अलङ्कारादिले परिक्रमा र चन्दनादिद्वारा पूजा गरी कानमा वा जटामा समाई कुश, तिल, जौ जल लिई सङ्कल्प गरेर ब्राह्मणका हातमा दिनुपर्दछ । घोडाको प्रार्थना गरी फूल चढाई दानप्रतिष्ठा गरी ब्राह्मणलाई दिनुपर्दछ ।

***अश्वदानविधिः*- अपवित्रः पवित्रो वा०** इति कर्मपात्रोदकेन वस्त्रालङ्कारादिभिरलङ्कृत-मश्वमभिषिच्य चन्दनाक्षतादिभिः पूजयेत् । ब्राह्मणं वस्त्रालङ्कारादिभिः समभ्यर्च्य धूपदीपनैवेद्यादिकं च कारयेत् ।

**सूर्यलोकान्मोक्षावाप्तिकाम इममश्वं यथोपस्करादियुतं यमदैवतं (तन्निष्क्रयीभूतद्रव्यं वा) यथानामदैवतं यथानामगोत्राय शर्मणे सुपूजिताय विप्राय तुभ्यमहं सम्प्रददे तत्सन्न मम,** इति ब्राह्मणहस्ते कुशतिलजलादिकं दत्वा अश्वं प्रार्थयेत् ।

*अश्वप्रार्थना* - **उच्चैश्रवस्त्वमश्वानां राज्ञां विजयकारकः।**
**सूर्यवाह ! नमस्तुभ्यमतः शान्तिं प्रयच्छ मे ।।** इति।

ततो दानप्रतिष्ठां कुर्यात् । सुर्वणं तदभावे द्रव्यं वा कुशादिसहितमादाय ब्राह्मणहस्ते दत्वा अश्वस्य कर्णं (सटां वा) ब्राह्मणहस्ते दद्यात् । ब्राह्मणश्च **स्वस्तीत्युक्त्वा** गृहणीयात् । कामस्तुतिं च पठेत् ।

*-इति अश्वदानविधिः-*

०००

# ४. महिषीदानविधिः (भैंसी-दान)

*विधिनिरूपण*

महिषी (लैनी भैंसी) दान गर्दा सुनको टीका, सुनको सिङ, चाँदीको खुर, तामाको पीठ,

कासको कचौंडी, रातो वस्त्र १ मिटर जतिले भैंसीलाई ढाकी घाँटीमा घण्टा र सप्तधान्यमाथि राखी तलका मन्त्रले प्रदक्षिणा गरी सिङमा समाई सङ्कल्प गरी पूजित ब्राह्मणलाई कुश, तिल, जौ, जल दिनुपर्दछ। भैंसीको प्रार्थना गरी सुवर्ण दानप्रतिष्ठा गर्नुपर्दछ, नसकेमा दशांश द्रव्य दानप्रतिष्ठा गर्नुपर्दछ ।

***महिषीपूजनम्*** - महिषीं (निष्क्रयद्रव्यं वा) जलेन परिक्रम्य पादान् सर्वशरीरञ्च अभिषिच्य **यमस्वरूपायै महिष्यै नमः** इति चन्दनाक्षतादिभिरभ्यर्च्य धूपं दीपं नैवेद्यञ्च कृत्वा प्रार्थयेत् ।

***महिषीप्रार्थना***- **महिषि ! ब्रह्मपुत्री त्वं लक्ष्मीरूपेण संस्थिता ।**
**प्रार्थितासि मया देवि ! यममार्गं निवारय ।।**
**महिषि ! यमरूपा त्वं विश्वामित्रविनिर्मिता ।**
**पूजिता हर मे पापं सर्वदानफलप्रदे ।**
**यथा शिवस्याप्सरसो रूपेण महिषी तथा ।**
**सर्वभाग्यप्रदे देवि ! दीर्घशृङ्गि नमोऽस्तु ते ।।** इति।

**ॐ तत्सदिति पूर्वसङ्कल्पमुच्चार्य अद्येत्यादि मम दीर्घायुष्यैहिकामुष्मिकपितृतारणोत्पन्न-शुभफलावाप्तिपूर्वकं सर्वारिष्टाविनाशार्थं शनैश्चरजनितपीडाशान्त्यर्थमिमां महिषीं सालङ्कारां रक्तमाल्यवस्त्रां वृत्तां स्वर्णशृङ्गीं रौप्यखुरां हैमतिलकां सप्तधान्योपरिस्थितां घण्टाभरणां**

**धेनूपस्करां यमदैवत्यां (तन्निष्क्रयीभूतद्रव्यं वा) यथागोत्राय शर्मणे सुपूजिताय विप्राय तुभ्यमहं सम्प्रददे तत्सन्न मम** इति। तत कुशतिलजलं ब्राह्मणहस्ते दद्यात्। प्रतिग्रहीता **देवस्य त्वा** इत्यादिपठन् स्पृष्ठदेशं स्पृष्ट्वा **स्वस्ति** इति प्रतिगृह्य कामस्तुतिं पठेत्। दाता प्रार्थयेत् -

**इन्द्रादिलोकपालानां या राज्यमहिषी शुभा।**
**महिषीदानमाहात्म्यात्साऽस्तु मे सर्वकामदा ।।**
**धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः।**
**महिषासुरस्य जननी या साऽस्तु वरदा मम ।।** इति।

महिष्युपरि पुष्पं क्षिपेत्। ततो दानप्रतिष्ठां कुर्यात्।

*दानप्रतिष्ठासङ्कल्पः* - सुवर्णं द्रव्यं वाऽदाय **ॐ तत्सदिति पूर्वसङ्कल्प मुच्चार्य मया कृतस्य महिषीदानस्य दानप्रातिष्ठार्थं यथापरिमितं सुवर्णं द्रव्यं वा पूर्वोक्तशर्मणे ब्राह्मणाय महिषीदानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे तत्सन्न मम** इति विप्रहस्ते दद्यात्। ततो भूयसी-दक्षिणामपि यथाशक्ति सङ्कल्पूर्वकं दद्यात्।

**अनेन विधिता दत्त्वा महिषीं द्विजपुङ्गवे।**
**सर्वान्कामानवाप्नोति इहलोके परत्र च ।।** इति।

हेमाद्रौ भविष्यपुराणे च।

*-इति महिषीदानविधिः- ०००*

**धेनूपस्करां यमदैवत्यां (तन्निष्क्रयीभूतद्रव्यं वा) यथागोत्राय शर्मणे सुपूजिताय विप्राय तुभ्यमहं सम्प्रददे तत्सन्न मम** इति। तत कुशतिलजलं ब्राह्मणहस्ते दद्यात् । प्रातिग्रहीता **देवस्य त्वा** इत्यादिपठन् स्पृष्ठदेशं स्पृष्ट्वा **स्वस्ति** इति प्रतिगृह्य कामस्तुतिं पठेत् । दाता प्रार्थयेत् -

**इन्द्रादिलोकपालानां या राज्यमहिषी शुभा ।**
**महिषीदानमाहात्म्यात्साऽस्तु मे सर्वकामदा ।।**
**धर्मराजस्य साहाय्ये यस्याः पुत्रः प्रतिष्ठितः।**
**महिषासुरस्य जननी या साऽस्तु वरदा मम ।।** इति ।

महिष्युपरि पुष्पं क्षिपेत् । ततो दानप्रतिष्ठां कुर्यात् ।

*दानप्रतिष्ठासङ्कल्पः* - सुवर्णं द्रव्यं वाऽदाय **ॐ तत्सदिति पूर्वसङ्कल्प मुच्चार्य मया कृतस्य महिषीदानस्य दानप्रातिष्ठार्थं यथापरिमितं सुवर्णं द्रव्यं वा पूर्वोक्तशर्मणे ब्राह्मणाय महिषीदानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे तत्सन्न मम** इति विप्रहस्ते दद्यात् । ततो भूयसी-दक्षिणामपि यथाशक्ति सङ्कल्पूर्वकं दद्यात् ।

**अनेन विधिता दत्त्वा महिषीं द्विजपुङ्गवे ।**
**सर्वान्कामानवाप्नोति इहलोके परत्र च ।।** इति ।

हेमाद्रौ भविष्यपुराणे च।

*-इति महिषीदानविधिः- ० ० ०*